# सामवेदसंहिता

## उत्तरार्चिकः

### चतुर्थादि-प्रपाठकत्रयात्मकः

चतुर्थो भागः

भगवत्सायणाचार्य्य-विरचित-भाष्य-सहितः

अधीतवेद-"प्रत्नकम्रनन्दिनी"-सम्पादकेन

**श्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण**

वृद्धसामगेन

टीकितो यथावसरं शोधितश्च ।



मुन्शीराम मनोहरलाल

पब्लिशर्स प्रा. लि.

SĀMAVEDA SAṀHITĀ
with the commentary of Sāyaṇa Āchārya

*Edited by*
Satyavrata Sāmaśramī Bhattacharyya

VOLUME IV

MUNSHIRAM MANOHARLAL
Price 2000 0 for 5 volumes

Originally Published in Bibliotheca Indica, Calcutta, 1871-78.
New Series nos. 356, 361, 365, 366, 369 and 371.

Reprinted 1983

Printed and published by Munshiram Manoharlal Publishers Pvt. Ltd.,
Post Box 5715, 54 Rani Jhansi Road, New Delhi-110055.

## ॥ मन्त्राणामकारादिक्रमेण सूची ॥

———०ः०———

मन्त्रप्रतीकम् पृष्ठम्

मन्त्रप्रतीकम् पृष्ठम्

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ७ ॥

## ॥ अथ सप्तमोऽध्यायः आरभ्यते* ॥

तत्र

प्रथमखण्डे,† प्रथम-तृचे—

प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ २
ज्योतिर्यज्ञस्यपवतेमधुप्रियं
३ २ ३ १ २ ३ २ ३ १ २
पितादेवानाञ्जनिताविभूवसुः ।
१ २ ० १ २ ३ १ २ ३क २र
दधातिरत्नँ स्वधयोरपीच्यं
३ १ २ ३ १ २ ३ १र २र
मदिन्तमोमत्सरइन्द्रियोरसः ॥ १‡ ॥

"यज्ञस्य" अग्निष्टोमादेः "ज्योतिः" दीपकः सोमः "प्रियम्" इन्द्रादीनां प्रियभूतं "मधु" मधुरसं "पवते" पूयते दशापवि-

---

* 'त्रिणवस्तौमिकमिदानीं षष्ठमह्नः'—इति वि० ।

† 'तयस्त्रिंशह्वतात्वम्'—इति वि० ।

‡ ऋ० वे० ७, ३, १९, ५ ।

त्वेण शोध्यतइत्यर्थः। रसो विशेष्यते—"पिता" पालकः "जनिता" फलस्य उत्पादकः "विभूवसुः" प्रभूतधनः तेन सम्पादयितुं शक्यत्वात् तादृशः सोमरसः "स्वधयोः" ["स्वधे"—इति द्यावापृथिव्योर्नाम (निघ० ३, ३०, १)] "अपीच्यम्" [—इति चान्तर्हितस्य (निघ० ३, २५, ६)] द्यावापृथिव्योर्मध्येऽन्तर्हितं "रत्नं" रमणीयं धनं "दधाति" स्थापयति यजमानेषु। स एव पुनर्विशेष्यते—"रसः" रसयिता "मदिन्तमः" मादयितृतमः "मत्सरः" स सोमः "इन्द्रियः" इन्द्रेण जुष्टः इन्द्रियवर्द्धको वा* ॥ १ ॥

अथ द्वितीया।

२ १२ ३ १२ ३क २र २
अभिक्रन्दन्कलशंवाज्यर्षति

१ २ ३ २ ३ १ २ ३ १
पतिर्दिवःशतधारोविचक्षणः।

१ २ ३ २ ३ १ २
हरिर्मित्रस्यसदनेषुसीदति

३ १ २ ३ १ २ ३ १ २
मर्मृजानोविभिःसिन्धुभिर्वृषा ॥ २† ॥

---

* 'ज्योतिर्यज्ञस्य पवते—ज्योतिरुज्ज्वलं दीप्तिकरं यज्ञस्य पवते पूयते मधुरसं * * * पिता देवानां जनिता विविधेन प्रकारेण जनिता। कथम्? "अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः"—अनेन प्रकारेण जनिता। विभुर्विश्वस्य भावयिता। दधाति धारयति रत्नं स्वधयोः अपीच्यम् अविनाशि मदिन्तमः मत्सरः भक्षणीयः इन्द्रियः इन्द्रस्य स्वभूतः रसः वीर्यम्'—इति वि०।

† ऋ० वे० ७, ३, १४, १।

सोमः "वाजी" वेजनवान् गमनवान् [ यद्वा, अश्वसदृशः ] "अभिक्रन्दन्" अभितः शब्दं कुर्वन् "कलशं" द्रोणकलशम् "अर्षति" गच्छति। कीदृशः "दिवः" द्योतमानस्य अन्तरिक्षस्य दशापवित्रलक्षणस्य "पतिः" पालकः स्वामी यद्वा द्युलोकस्य स्वामी [ दिवि हि सोमउत्पन्नः "तृतीयस्या मितो दिवि सोम आसीत्"—इति श्रुतेः ] "शतधारः" परिमित-धार-पेतः "विचक्षणः" विशेषेण द्रष्टा* "हरिः" हरितवर्णः सोमरसः "मित्रस्य" मित्रवर्द्धितकरस्य यज्ञस्य "सदनेषु" "सीदति" निषण्णो भवति†। कीदृशः सन्? "सिन्धुभिः" स्यन्दन-साधनैः अविरोमभिः दशापवित्रावयवैः‡ "मर्मृजानः" शोध्यमानः "वृषा" वर्षकः फलानाम् ॥ २ ॥

अथ तृतीया।

२ ३ १ १ २ २ १ ३
अग्रेसिन्धूनाम्पवमानोअर्ष

१ २ ३ १ २ ३ १र २र
स्यग्रेवाचोअग्रियोगोषुगच्छसि।

२ ३ १ १ ३ १र २र
अग्रे वाजस्यभजसेमहद्धन९

३ २ ३ १ २
स्वायुधःसोतृभिःसोमसूयसे ॥ ३¶ ॥ १

* 'विश्वस्य द्रष्टा'—इति वि०।

† 'मित्र आदित्यविशेषः। अथवा मित्रस्य यजमानस्य सखा स्तुत्यर्थ-लक्षणेन सम्बन्धेन तस्य हृष्टेषु द्रोणकलशप्रभृतिषु सीदति'—इति वि०।

‡ 'अविभिः—तृतीयाबहुवचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम। अवेः सम्भूतेन दशापवित्रेण सिन्धुभिः उदकैरित्यर्थः'—इति वि०।

¶ ऋ० वे० ७, ३, १४, २।

हे सोम! त्वं "सिन्धूनां" स्यन्दन-स्वभावाना मुदकानाम् "अग्रे" पुरस्तात् "पवमानः" पूयमानः सन् "अर्षसि" गच्छसि वृष्ट्योदकं जनयितु माहुतिद्वारान्तरिक्षे गच्छसीत्यर्थः। तथा "वाचः" माध्यमिकाया अपि "अग्रियः" ग्राह्यः पूज्यः सन् गच्छसि तथा "गोषु" रश्मिषु तेषामग्रे गच्छसि तथा "वाजस्य" अन्नस्य मन्नस्य लाभायेति शेषः। तदर्थं "महाधनं" सङ्ग्रामं "भजसे"* सेवसे। कीदृशः सन्? "स्वायुधः" शोभन--प्रहरण-साधनायुधः। हे सोम! तादृशस्त्वं "सोतृभिः" अभिषुण्वद्भिः अध्वर्य्वादिभिः "सूयसे"† अभिषूयसे॥ २॥ १

॥ मरुतान्धेनु॥ ज्यो२३४। तिर्यज्ञस्यपवतेमधौ। ष्टोप्रायाम्। पितादेवानाञ्जनिता। विभूवासू२ः। दधातिरत्न९स्वधयोः। अगीचायार२३म्। मादिन्ता२३४माः। मत्सरइन्द्रीयो३रा५सा६५६ः॥(१) आ२३४। भिक्रन्दन्कलशंवाजियौ। द्योषाताायि। पतिर्दिवःशत धारो। विचक्षाणा२ः। हरिर्मित्रस्यसदनायि। पुसी दाता२३यि। मार्मृज।२३४नाः। अविभिःसि। धूभा

*, † "भजते"—इति "पूयते"—इति च ख०-पाठः।

३यिर्वा५र्षा६५६॥(२) आ२३४। अ सिन्धूनाम्पवमान

औ। होर्षासायि। अग्रे वाचोअग्रियोगो। पुगच्छा

सा२यि। अग्रेवाजस्यभजसायि। महद्धाना२३म्।

सूवायू२३४धाः। सोतृभिःसो। मासू३या५सा६

५६यि(३)॥११*॥ [१]

॥ वरुणसाम ॥ ज्योतिय्यँ। ज्ञा३स्यपवतोमधुप्रि

याम्। पितादेवानाञ्जनिताविभूवमू२३वौ।यि। दधा

तिरत्नꣳस्वधयोः। अपीचियार३म्। वोयि। मदायि

न्तार३माः। मात्सरः। इन्द्रि। यो२३। रसाउवा

३॥(१) अभिक्र। दा२न्कलशंवा। जियर्षतायि। प

तिर्दिवःशतधारोविचक्षणा२३ वोयि। हरिम्मित्रस्यसद

ने। पुसीदतार३यि। वोयि। मर्म्मजार२३नाः। आ

* ऊ० गा० ८प्र० ३ख० ११सा०।

१ १ २ ४ ३
विभिः। सिन्धुः। भा२३यिः। वृषाउवा३ ॥(२) अग्रे

५ ४ २ २ ४ र ५ १ रर र
सि। धू३नाम्यवमानः। अर्षसायि। अग्नेवाचोअग्नि

र र १ र र र
योगोषुगच्छसा२३यिहोयि। अग्रेवाजस्यभजसे। मह

१ १ २ २ १ २ १र
हृना२३म्। होयि। सुवायू२३धाः। सोतृभिः। सो

१ २ १ २ १ २ १र
म। सू२३। यसाउवा३। ए३। इन्दुःसमुद्रमुर्विया

१र २ १ १ १
विभाती२३४५(३) ॥ २* ॥ [२] १

अथ द्वितीय-तृचे—

प्रथमा।

१ २ ३ २ ३ १ २ ३ १र २र ३ २
असृक्षतप्रवाजिनोगव्यासोमासोअश्वया।

३ १ २ ३ १र २र
शुक्रासोवीरयाशवः ॥ १* ॥

"वाजिनः" बलवन्तः "शुक्रासः" दीप्ताः "आशवः" वेगवन्तश्च "सोमासः" सोमाः "गव्यया"‡ यजमानस्य गवेच्छया तथा

* ऊ० गा० २३प्र० २ख० २सा०।

† ऋ० आ० ५, २, ५, ६ ( २भा० ३६४० ) = ऋ० वे० ७, १, १६, ४, ५।

‡ "गव्या"—इति ऋ०-पाठः।

"अश्वया" अश्वेच्छया तथा "वीरया" वीराः पुत्र-भृत्यादयः तेषा मिच्छया "प्र असृक्षत" प्रासृज्यन्त रसान्वा विसृज्यन्ते ॥१॥

अथ द्वितीया।

३ १ २ ३१ ११ १ २ ३ १ २
शुम्भमानाऋतायुभिर्मृज्यमानागभस्त्योः।
१ २ ३ १ २ ३ १ २
पवन्ते वारे अव्यये ॥ २* ॥

"ऋतायुभिः" यज्ञेच्छुभिः अध्वर्यु-प्रभृतिभिः "शुम्भमानाः" अलङ्क्रियमाणाः "गभस्त्योः" हस्तयोः हस्ताभ्यां† "मृज्यमानाः" शोध्यमानाः "वारे" वाले दशापवित्रे। कीदृशे? "अव्ये" अविमये "पवन्ते" पूयन्ते ॥ २ ॥

अथ तृतीया।

१र २र३ २ ३२३१ २ ३ २ ३१ २
तेविश्वादाशुषेवसुसोमादिव्यानिपार्थिवा।
१ २ ३ १र २र
पवन्तामान्तरिक्ष्या ॥ ३‡ ॥ २

"ते" सोमाः अभिषूयमाणाः "दाशुषे" हविः-प्रदात्रे यजमानाय "विश्वा" सर्वाणि "वसु" वासकानि गवादि-धनानि "आ

* ऋ० वे० ७, १, ३६, ५।

† "गभस्त्योः—गभस्तिभ्यां बाहुभ्यां। 'गभस्ती बाहू—इति बाहुनामसु पाठात्' —इति ऋ०-व्याख्या।

‡ ऋ० वे० ७, १, ३७, १।

पवन्तां सर्वतः चरन्तु।‡ वस्वित्युक्तं, कथं वसूनां विश्वत्वमिति? उच्यते—"दिव्यानि" दिवि भवानि "पार्थिवा" पृथिवी-सम्बन्धानि "अन्तरिक्षा" अन्तरिक्षाणि, अन्तरिक्षे भवानि* एव मुक्तप्रकारेण विश्वानीत्यर्थः॥ ३॥ २

पवस्वेति-दशर्चे तृतीय-सूक्ते—

प्रथमा।

१ २ ३ १र २र ३ १ २ ३ १ २
पवस्वदेववीरतिपवित्रꣳसोमरꣳह्या।
१ २ ३ १र २र
इन्द्रमिन्दोवृषाविश॥ १†॥

हे सोम! "देववीः" देवकामः‡ त्वं "रंह्या" वेगेन "पवित्रं" यथा भवति "अति पवस्व" अतिचर किञ्च, हे "इन्दो" "वृषा" सेचकस्त्वं इन्द्रम् "आविश" प्रविश॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ १ २ ३ १
आवच्यस्वमहिप्सरोवृषेन्दोद्युम्नवत्तमः।
१र २र ३ २
आयोनिन्धर्णसिस्सदः॥ २¶॥

* 'धनानीत्यनुषज्यते'—इति वि०।

† ऋ० आ० ६, १, २, ४ (२आ प्र० ऋ० वे० ६, ७, १८, १।

‡ 'देवानां भक्तभूतः'—इति वि०।

¶ ऋ० वे० ६, ७, १८, २।

हे "इन्दो" सोम ! "वृषा" सेवकाभीष्टदाता वर्षकः "द्युम्नवत्तमः" यशस्वितमः "धर्णसि" धर्त्ता त्वं "मही" महत् "स्वरः" पानीयम् "अन्धः" अन्नम् "आवच्यस्व" अस्मान् प्रति आगमय किञ्च "योनिं" स्वकीयं स्थानम्* "आसदः" आसीद च ॥ २ ॥

अथ तृतीया ।

१ २ ३१२उ ३ १ २ ३ १ २ ३ १ २
अधुक्षतप्रियम्मधुधारासुतस्यवेधसः ।
३ १ २ ३ १ २
अपोवसिष्टसुक्रतुः ॥ ३† ॥

"सुतस्य" अभिषुतस्य "वेधसः" अभिलषितस्य विधातुर्यस्य "सोमस्य" "धारा" "प्रियं" प्रीतिकरं "मधु" अमृतम् "अधुक्षत" दुग्धे स "सुक्रतुः" सुकर्मा सोमः "अपः" "वसतीवरीः" "वसिष्ट" आच्छादयति ॥ ३ ॥

अथ चतुर्थी ।

३ १ २ ३१र २र ३ १ २
महान्तन्त्वामहीरन्वापोअर्षन्तिसिन्धवः ।
१र २र ३ १ २
यद्गोभिर्वासयिष्यसे ॥ ४‡ ॥

हे सोम ! त्वं "यद्" यदा यज्ञे "गोभिः" गोविकारैः पयोभिः "वासयिष्यसे" आच्छादयिष्यसे तदा "महान्तं" गुणैः

---

* 'योनिं द्रोणकलशम्'—इति वि०।

† ऋ० वे० ९, ७, १८, ३।

‡ ऋ० वे० ९, ७, १८, ४।

महत्व "त्वा अनु" त्वामनु "सिन्धवः" स्यन्दमानाः "मही:" महत्यः "आपः" "अर्षन्ति" गच्छन्ति ॥ ४ ॥

अथ पञ्चमी।

३ २ ३ १ २ ३ २ ३ १ २ ३ १
समुद्रोअप्सुमामृजेविष्टम्भोधरुणोदिवः।
१ २ ३ १ २ २ २
सोमःपवित्रेअस्मयुः ॥ ५* ॥

"समुद्रः" समुद्रवन्ति अस्माद्रसाइति समुद्रः "विष्टम्भः" "दिवः" स्वर्गस्य "धरुणः" धर्त्ता च "अस्मयुः" अस्मत्-कामः† "सोमः" "अप्सु" उदकेषु "मामृजे" मर्मृज्यते पवित्रेऽभिषिच्यते इत्यर्थः ॥ ५ ॥

अथ षष्ठी।

१ २ ३ २ ३ १ २ ३ २ ३ १२ ३२३ २
अचिक्रदद्वृषाहरिर्म्महान्मित्रोनदर्शतः।
१२ २२
सᳫंसूर्य्येणदिद्युते ॥ ६‡ ॥

"वृषा" कामानां वर्षकः "हरिः" हरितवर्णः "महान्" सर्वोत्तमः "मित्रः न" यथा सखा तद्वत् "दर्शतः" दर्शनीयः यः सोमः "अचिक्रदत्" शब्दं करोति सोऽयं सोमः सूर्य्येण सह "सन्दिद्युते" समित्येकीभावे सूर्य्येण सह द्योततइत्यर्थः ॥

"रोचते"—इति बह्वृचानां पाठः ॥ ६ ॥

---

* उ० आ० ६, १, २, १ ( २ भा० ५५ पृ० )=ऋ० वे० ९, ७, १८, ५ ।

† 'अस्मासु मत्सरमिच्छुः'—इति वि०।

‡ ऋ० वे० ६, ७, १९, १ ।

अथ सप्तमी।

२ ३ १ २ ३ १ २ ३ १ २
गिरस्तइन्द्रओजसामर्मृज्यन्तेअपस्युवः।
२ ३ १ २ ३ १ २
याभिर्म्मदायशुम्भसे॥ ७*॥

हे "इन्दो!" "ते" तव "ओजसा" बलेन "अपस्युवः" कर्म्मेच्छा-सम्बन्धिन्यः ताः "गिरः" स्तुतयः "मर्मृज्यन्त" शोध्यन्ते। "याभिः" "गीर्भिः" त्वं मदाय "चरन्" "शुम्भसे" अलङ्क्रियसे† ॥ ७॥

अथ अष्टमी।

२ ३ १ २ ३ १ २ ३ १ २
तन्त्वामदायघृष्वयउलोककृत्नुमीमहे।
२ ३ १ २ ३ २
तवप्रशस्तयेमहे॥ ८‡॥

"लोककृत्नुं" लोकस्य कर्त्तारं "तं त्वा" सोम "घृष्वये" शत्रूणां घर्षण-शीलाय¶ "मदाय" "ईमहे" याचामहे। हे सोम! पातमिति शेषः। किमर्थम्? इति, उच्यते— "तव" "महे" महते "प्रशस्तये" प्रशंसनाय॥ ८॥

---

* ऋ० वे० ६, ७, १९, २।

† 'शुम्भसे शोभसे'—इति वि०।

‡ ऋ० वे० ६, ७, १९, ३।

¶ 'घृष्वये—प्रसन्नार्थम्'—इति वि०।

अथ नवमी।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १
गोषाइन्दोनृषाअस्यश्वसावाजसाउत।
३ २ ३ १ २ ३ १
आत्मायज्ञस्यपूर्व्यः॥ ९* ॥

हे "इन्दो" क्षिप्यमान-सोम! "यज्ञस्य" ज्योतिष्टोमादेः "पूर्व्यः" पुराणः नित्यः आत्मा स्वरूपभूतः [सोमस्य यज्ञस्वरूपत्वं प्रसिद्धम्]। तादृशस्त्वं "गोषा" अस्मभ्यं गवां दाता "असि" भवसि, "नृषा" नृणां पुत्र-भृत्यादीनां दातासि, "अश्वसाः" अश्वानां दाता चासि, "उत" अपिच "वाजसा" अन्नानां दाता चासि॥ ९॥

अथ दशमी।

३ १ २ ३ १र २र ३ १ २
अस्मभ्यमिन्दविन्द्रियम्मधोःपवस्वधारया।
३ १ २ ३ १ २
पर्ज्जन्योवृष्टिमाँइव॥ १०† ॥ ३

हे "इन्दो" सोम! "इन्द्रियम्" इन्द्रेण जुष्टम् इन्द्रियस्य वीर्यस्य वा वर्द्धकं रसं "मधोः मदकरस्य अमृतस्य "धारया" "पर्जन्योवृष्टिमाँइव" यथा वर्षवान् पर्जन्यो मेघः तथा "अस्मभ्य" मेधातिथिभ्यः "पवस्व" चर॥ १०॥

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य प्रथमः खण्डः॥ १॥ ३

---

* ऋ० वे० ६, ७, १९, ५।

† ऋ० वे० ६, ७, १९, ४।

अथ द्वितीय-खण्डे—

सनाचेति-दशर्चे प्रथमे सूक्ते, प्रथमा।

१ २   ३ १ २ ३ १ २   ३ २ ३ १ २
सनाचसोमजेषिचपवमानमहिश्रवः।
१ २ ३ १ २
अथानोवस्यसस्कृधि ॥ १* ॥

हे "महिश्रवः" महद्धन! "पवमान" सोम! "सन"† अस्मद्यागे यजनीयान् देवान् भज "जेषि च" याग-विघ्नकारिणो राक्षसांश्च जय। "अथ" देवान् प्राप्य राक्षसांश्च जित्वा अनन्तरं "नः" अस्मान् "वस्यसः" श्रेयसः‡ "कृधि" कुरु श्रेयोऽस्मभ्यं देहीत्यर्थः॥ १॥

अथ द्वितीया।

२ ३ २ ३ १ २ १   १ २   ३ १ २
सनाज्योतिःसनास्वा३ऽ३र्विश्वाचसोमसौभगा।
१ २ ३ २ २
अथानोवस्यसस्कृधि ॥ २¶ ॥

हे सोम! त्वं "ज्योतिः" तेजः "सन" अस्मभ्यं प्रयच्छ। अपिच "स्वः" स्वर्गं "सन" अस्मभ्यं देहि। "विश्वा" विश्वानि "सौभगा" सौभाग्यानि "च" सन सिद्धमन्यत् ॥ २ ॥

---

* ऋ० वे० ६, ७, २२, १।

† 'सना-शब्दः सदावाची। सदा जेषि च शत्रून्'—इति वि०। सायण-मते तु 'सना'—इति क्रियापदम् "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति दीर्घः। विवरणकार-मते तु सना सदार्थमव्ययमिति "निपातस्य च (६, ३, १३६)"—इति दीर्घः। मूले सर्वत्रैव दीर्घान्तः, व्याख्यानकाले त्वयथायथं ह्रस्वान्त-प्रतीकमेव गृह्यते; एवमेव ग्रैलिंगस्य व्याख्यातुः सर्वत्रेति बोध्यम्।

‡ 'वस्यसः—वसनीयः'—इति वि०।

¶ ऋ० वे० ६, ७, २२, २।

अथ तृतीया।

२ १ १ २ ३ २उ ३ १ २ ३ १ २
सनादक्षमुतक्रतुमपसोममृधोजहि।

१ २ ३ १ २
अथानोवस्यसस्कृधि॥ ३† ॥

हे सोम! त्वं "दक्षं" बलं "सन" अस्मभ्यं देहि, "उत" अपिच "क्रतुं यज्ञं" सन, "मृधः" हिंसकान् शत्रून् "अप जहि" मारय। सिद्धमन्यत्॥ ३॥

अथ चतुर्थी।

१ २ ३ २ ३१ ३ १ २ ३ १ २
पवीतारःपुनीतनसोममिन्द्रायपातवे।

१ २ ३ १ २
अथानोवस्यसस्कृधि॥ ४‡ ॥

हे "पवीतारः" सोमस्य शोधयितार ऋत्विजः! "सोमं" "पुनीतन" पावयत दशापवित्रेण शोधयत किमर्थम्? "इन्द्राय पातवे" इन्द्रस्य पानाय। गतमन्यत्॥ ४॥

---

† ऋ० वे० ६, ७, ११, ३।

‡ ऋ० वे० ६, ७, ११, ४।

अथ पञ्चमी।

१र १र३१ १ २१ २१२ २१ १ १
त्वꣳसूर्येनआभजतवक्रत्वातवोतिभिः।
१ १ ३ १ १
अथानोवस्यसस्कृधि॥ ५* ॥

हे सोम! त्वं "तव क्रत्वा तव ऊतिभिः" त्वत्कर्त्तृकाभी रक्षाभिश्च "नः" अस्मान् "सूर्ये" "आ भज" प्रापय। सिद्धमन्यत्॥ ५॥

अथ षष्ठी।

२३१२ २ ३१ २ ३१२
तवक्रत्वातवोतिभिर्ज्योक्पश्येमसूर्य्यम्।
१२ ३१
अथानोवस्यसस्कृधि॥ ६† ॥

हे सोम! "तव" "क्रत्वा" प्रज्ञानेन "तव ऊतिभिः" पालनैश्च "ज्योक्" चिरं पश्येम सूर्यं पश्याम द्रक्ष्यामः। सिद्धमन्यत्॥ ६॥

अथ सप्तमी।

२क२र ३१ २ ३१२ ३ २
अभ्यर्षस्वायुधसोमद्विवर्हसꣳरयिम्।
१२ ३ १२
अथानोवस्यसस्कृधिः॥ ७‡॥

हे "स्वायुध" शोभनायुध सोम! त्वं "द्विबर्हसं" द्वयोर्द्यावा पृथिव्योः स्थानयोः परिवृढं "रयिं" धनम "अभ्यर्ष" स्तोतॄन् अभिगमय। सिद्धमन्यत्॥ ७॥

---

* ऋ० वे० ६, ७, २१, ५।
† ऋ० वे० ६, ७, २२, १।
‡ ऋ० वे० ६, ७, २२, २।

अथाष्टमी।

२ ३ १ २ ३ १ २ ३ १ १ ३ २
अभ्याऽ३ऽर्षानपच्युतोवाजिन्त्समत्सुसासहिः।
१ २ ३ १ २
अथानोवस्यसस्कृधि॥ ८* ॥

हे सोम! "समत्सु" सङ्ग्रामेषु "अनपच्युतः शत्रुभिरनाहतः "सासहिः" शत्रूणामभिभविता† त्वम् "अभ्यर्ष" अभिगच्छ क्षर। गतमन्यत्॥ ८॥

अथ नवमी।

२ ३१ २ ३ १ २ ३ १ २
त्वांयज्ञैरवीवृधन्पवमानविधर्मणि।
१ २ ३ १ २
अथानोवस्यसस्कृधि॥ ९‡ ॥

हे "पवमान" शोध्यमान सोम! त्वां "विधर्मणि" विविधफलस्य धारके यज्ञे "यज्ञैः" यज्ञ-साधनैः "स्तोत्रैः" "अवीवृधन्" यजमाना वर्द्धयन्ति। गतमन्यत्॥ ९॥

अथ दशमी।

३ १ २ ३ २ ३ २ ३ १ २ ३ १ ३ १ २
रयिन्नश्चित्रमश्विनमिन्दोविश्वायुमाभर।
१ २ ३ १ २
अथानोवस्यसस्कृधि॥ १०¶ ॥ ४

* ऋ० वे० ६, ७, २३, ३।

† 'सासहिःसाधनस्वभावः'—इति वि०।

‡ ऋ० वे० ६, ७, २३, ४।

¶ ऋ० वे० ६, ७, २३, ५।

हे "इन्दो !" यागेषु क्रियमाण सोम ! त्वं "चित्रं" नाना-विधम् "अश्विनम्" अश्ववन्तस्य "विश्वायु" सर्वगामिनं* "रयिं" धनं "नः" अस्मभ्यम् "आ भर" आहर । गतमन्यत् ॥ १० ॥ ४

तरत्समन्दीति चतुर्ऋचे द्वितीयसूक्ते—

प्रथमा† ।

१ ३ २ ३ १ २   ३ १ २ ३ १र २र
तरत्समन्दीधावतिधारासुतस्यान्धसः ।

२ ३ १ ३ १ २
तरत्समन्दीधावति ॥ १‡ ॥

"मन्दी" देवानां हर्षकरः स सोमः "तरत्" स्तोतॄन् पाप्मनः सकाशात् तारयन् "धावति" दशापवित्रादधः क्षरति । तदेव दर्शयति—"सुतस्य" अभिषुतस्य "अन्धसः" देवानामन्नात्मकस्य सोमस्य धारा धावतीति । पुनरपि तदेवा-त्यन्तादरार्थं "तरत्समन्दीधावति"—इति¶ ॥ [यद्वास्या ऋचो यास्केनोक्तोऽर्थो द्रष्टव्यः, तद्यथा—"तरति स पापं सर्वं मदीयं स्तौति धावति गच्छत्यूर्द्ध्वां गतिं धारासुतस्यान्धसोधाराभिषुतस्य सोमस्य मन्त्रपूतस्य वाचासुतस्य (निरु०१३,६)"—इति ॥ २ ॥

---

* 'विश्वायुं—दीर्घायुर्धेय अन्न आभर'—इति वि० ।

† 'तरत्समन्दीधावतीति-चतुर्ऋचः छन्दसिकाभाष्ये विस्तरेणोक्ताः, सप्रयोजनं तथाप्यत्र सङ्क्षेपेणोच्यते'—इति वि० ।

‡ ऋ० आ० ६, १, २, ४ (२भा० ५८४पृ०)=ऋ० वे० ७, १, १५, १ ।

¶ 'तरत्सः—तरति स पापं यस्य मन्दी धावति सोमस्य । सोमस्य धारा वक्तव्या सुतस्याभिषुतस्य अन्धसोऽन्नस्य सोम-लक्षणस्य'—इति वि० ।

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ १ २ ३ १ २
उस्त्रावेदवसूनाम्मर्त्तस्यदेव्यवसः।
२ ३ २ ३ १ २
तरत्समन्दीधावति॥ २* ॥

"वसूनां" धनानाम् "उस्त्रा" उत्सरणशीला प्रदात्री "देवी" द्योतमाना स्तूयमाना वा यस्य सोमस्य धारा "मर्त्तस्य" मनुष्यं यजमानम् "अवसः" रक्षितुं "वेद" जानाति† । सिद्धमन्यत्॥ २॥

अथ तृतीया।

३ १ २ ३ २ ३ २ ३ १ २
ध्वस्रयोःपुरुषन्त्योरासहस्राणिदद्महे।
२ ३ २ ३ १ २
तरत्समन्दीधावति ॥ ३‡ ॥

"ध्वस्रयोः पुरुषन्त्योः"¶ ध्वस्रः कश्चिद्राजा तथा पुरुषन्तिश्च, तयोरुभयोरत्ने तद्योग-विवक्षया द्विवचनं द्रष्टव्यं "सहस्राणि" धनानां सहस्राणि "आ दद्महे" वयं प्रतिगृह्णीमः। तदस्माभिः प्रतिगृहीतं धनमुत्तममस्त्विति ऋषिः सोमं प्रार्थयत इति सोमस्य स्तुतिः। सिद्धमन्यत् यथावत्सात्र एतयोर्धनानि

---

* ऋ० वे० ७, १, १५, २।

† 'उस्त्रा दीप्ता वेद वसूनां, विद ज्ञाने, विद्लृ लाभे, विद सत्तायाम्, सर्वं ज्ञा धारा'—इति वि०।

‡ ऋ० वे० ७, १, १४, ३।

¶ 'ध्वस्रयोः पुरुषन्त्योः—समान-स्वभावयोः सोमधारयोरपि क्षीणकल्मषेन सह सम्बन्धयोः पापध्वंसकरयोः'—इति वि०।

प्रतिजग्राह एवं तरन्त-पुरुमीढौ प्रतिजगृहतुः। तथाच शाट्यायनकम्—'अथ ह वै तरन्त-पुरुमीढौ वैदश्वी ध्वस्नयोः पुरुषन्त्योः बहु प्रतिगृह्य गरगिराविव मेनाते तौ ह स्माङ्गुल्या सातं प्रतिस्मयाते तावकामयेतामसातन्नाविवेद सातंत्वादात्त मिवैव न प्रतिगृहीत मिति भावे तच्चतुर्ऋचमपश्यतान्तरेण प्रत्यैतां तयोर्वैतयोरसातंसातमभवदात्तमिवैव न प्रतिगृहीतं स यः प्रतिगृह्य कामयेत"—इत्यादि ॥ ३ ॥

अथ चतुर्थी।

आययोस्त्रिꣳशतन्तना सहस्राणि च दद्महे।

तरत्समन्दी धावति ॥ ४* ॥ ५

"ययोः" ध्वस्न-पुरुषन्त्योः "त्रिंशतं" त्रीणि शतानि सहस्राणि च "तना" वस्त्राणि "आ दद्महे" वयं "प्रतिगृह्णीमः" तयोरस्माभिः प्रतिगृहीतं तत् सर्वम् अप्रतिगृहीतमस्त्विति सोमम् ऋषिः प्रार्थयतइति सोमस्यैव स्तुतिः। गतमन्यत् ॥४॥ ५

एतेसोमाइति तृचं तृतीयं सूक्तम्—

तत्र, प्रथमा।

एते सोमा असृक्षत गृणानाः शवसे महे।

मदिन्तमस्य धारया ॥ १† ॥

* ऋ० वे० ७, १, १४, ४।

† ऋ० वे० ७, १, २८, १।

"मदिन्तमस्य" देवानां मादयितृतमस्य रसस्य सम्बन्धिन एते सोमा अभिषुताः सरूपाः "गृणानाः" स्तूयमानाः "मह्ने" महते "श्रवसे" अस्माकं बलाय धारया "अस्तृत" गच्छन्ति ॥१॥

अथ द्वितीया।

३ १र २र ३ १ २ ३ १ ३ २ ३ १ २
अभिगव्यानिवीतयेनृम्णापुनानोअर्षसि।
३ १ २ ३ १ २
सनद्वाजःपरिस्रव ॥ २* ॥

हे सोम! "वीतये" देवानां भक्षणाय "नृम्णा" नृम्णानि धनवत् प्रियतराणि† "गव्यानि" गो-सम्बन्धीनि क्षीरादीनि "पुनानः" पूयमानः सन् "अभ्यर्षसि" अभिगच्छसि। हे सोम! "सनद्वाजः" दीयमानान्नः‡ त्वं "परि" परितः "स्रव" दशापवित्रादधः क्षर ॥ २ ॥

अथ तृतीया।

३ २ ३ १ २ ३ १ २ १ २ ३ १ २
उतनोगोमतीरिषोविश्वाअर्षपरिष्टुभः।
२ ३ १ २ १
गृणानोजमदग्निना ॥ ३¶ ॥ ६

* ऋ० वे० ७, १, २८, ३।

† 'नृम्णा बलेन'—इति वि०।

‡ 'सनत् सदा'—इति वि०।

¶ ऋ० वे० ७, १, २८, ४।

"उत" अपिच हे सोम! "जमदग्निना" जमदग्नि-नाम्ना ऋषिणा मया "गृणानः" स्तूयमानः त्वं "नः" अस्माकं "गोमतीः" गोभिर्युक्तानि "परिष्टुभः" परितः स्तोतव्यानि* सर्वाणि "इषः" अन्नानि देहीत्यर्थः॥ ३ ॥ ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य द्वितीयः खण्डः† ॥ २ ॥

---

इमंस्तोममिति-तृतीयखण्डे‡—

प्रथम-तृचे,¶ प्रथमा।

२ १उ ३ १ २ ३ १ २ ३
इमꣳस्तोममर्हतेजातवेदसे

१ २ ३ १ २ ३ १ २
रथमिवसम्महेमामनीषया।

२ १उ ३ १ २ ३ १र
भद्राहिनःप्रमतिरस्यसꣳस

२र३ १र २र ३१र २र
द्यग्नेसख्येमारिषामावयन्तव॥ १§॥

"अर्हते" पूज्याय "जातवेदसे" जातानामुत्पन्नानां वेदित्रे, जात-प्रज्ञाय जात-धनाय वा अग्नये "मनीषया" निश्चितया

---

* 'परिष्टुभः—परि समन्तात् स्तौति'—इति वि०।

† 'चक्रं बहिष्पवमानम्'—इति वि०।

‡ 'अयस्मिं स्तोमः पञ्चमः'—इति वि०।

¶ 'आग्नेयमाज्यम्'—इति वि०।

§ ऋ० आ० १, ९, २, ४ (१म। १०१ष०)=ऋ० वे० १, ६, १०, १।

बुद्धा "इमम्" एतत्सूक्तरूपं स्तोमं रथमिव यथा तष्टा रथं संस्करोति तथा "सम्महेम" सम्यक् पूजितं कुर्मः । तस्याग्नेः "संसदि" सम्भजने "नः" अस्माकं "प्रमतिः" प्रकृष्टा बुद्धिः "भद्रा हि" कल्याणी समर्था खलु अतस्तया बुद्धा स्तुम इत्यर्थः । हे "अग्ने" "तव सख्ये" अस्माकं त्वया सह सखित्वे सति वयं "मारिषाम" हिंसिता न भवामः अस्मान् रक्षेत्यर्थः । [ "अर्हते"—अर्ह पूजायाम् ( भ्वा० प० ) "अर्हः प्रशंसायामिति ( ३,२,१३३) लटः शत्रादेशः, शपः पित्वादनुदात्तत्वम् ( ३,१,४), अतुवादुपदेशाल्लसार्वधातुक-स्वरेणाद्युदात्तत्वम् (६,१,१८६) । मह—मह पूजायाम् ( भ्वा० प० ) । रिषाम—रिष हिंसायां (भ्वा०प० ) व्यत्ययेन शः(३,१, ८५) । तव—"युष्मदस्मदोर्ङसि (६,१,२११)" —इत्याद्युदात्तत्वम ॥१॥

अथ द्वितीया ।

१ २ ३ २ ३ १ २ ३ १ २

भरामेध्मङ्कृणवामाहवीꣳषिते

३ १ २ ३ १ २ ३ १ २

चितयन्तःपर्वणापर्वणावयम् ।

३ १ २ ३ १ ३ ३ १

जीवातवेप्रतराꣳसाधयाधियो

१र २ १र १र २ १र १र

ग्नेसख्येमारिषामावयन्तव ॥ २* ॥

हे "अग्ने !" त्वदागार्थम् "इध्मम्" इन्धन-साधनम् एकविंशति-द्रव्यात्मकं समित्समूहं "भराम" सम्भराम सम्पादयाम,

* ऋ० वे० १, ६, २०, ४ ।

तदनु "ते" तुभ्यं "हवींषि चरुपुरोडाशादि-लक्षणान्यन्नानि वयं "कृणवाम" करवाम। किङ्कुर्वतः? "पर्वणा पर्वणा"* प्रतिपच्च-माद्यन्ताभ्यां दर्शपूर्णमासाभ्यां "चितयन्तः" त्वां प्रज्ञापयन्तः स त्वं "जीवातवे" अस्माकं जीवनौषधाय चिरकालावस्थानाय "धियः" कर्माणि अग्निहोत्रादीनि "प्रतरां" प्रकृष्टतरं "साधय" निष्पादय। अन्यत् समानम्॥ [चितयन्तः—चिती सञ्ज्ञाने (भ्वा० प०) सञ्ज्ञापूर्वस्य विधेरनित्यत्वात् लघूपध-गुणाभावः। पर्वणा—"नित्यवीप्सयोः (८, १, ४)"—इति वीप्सायां द्विर्भावः, "तस्य परमाम्रेडितम् (८, १, २)"—इति परस्याम्रेडित-सञ्ज्ञायाम् अनुदात्तत्वम् (८, १, १९)। प्रतरां—तरबन्तात् प्रशब्दात् क्रिया-प्रकर्षे वर्त्तमानात् "किमेत्तिङव्ययघादाम्वद्रव्ये (५, ४, ११)"—इत्यामु-प्रत्ययः॥ २॥

अथ तृतीया।

३ १ २ ३ १ २ ३ २ ३ १ ३
शकेमत्वासमिधꣳसाधयाधिय

२ ३ २ ३ १ २ ३ १ २
स्त्वेदेवाहविरदन्त्याहुतम्।

१ २ ३ १ २ २३ १ २ १२
त्वमादित्याꣳआवहतान्ह्यु ३ऽश्म

१२ ३ १२ २२ ३ १२ २२
स्यग्नेसख्येमारिषामावयन्तव॥ २†॥ ७

---

* "पर्वणा—तृतीयैकवचनमिदं सप्तम्येकवचनस्य स्थाने द्रष्टव्यम्, पर्वणि भूयाम् समर्थः'—इति वि०।

† ऋ० वे० १, ६, २०, २।

हे अग्ने! "त्वा" त्वां "समिधं" सम्यगिद्धं कर्त्तुं "शकेम" शक्ता भूयास्म। त्वञ्च "धियः"* अस्मदीयानि दर्शपूर्णमासादीनि कर्माणि "साधय" निष्पादय त्वया हि सर्वं निष्पद्यन्ते यस्मात् "त्वे" त्वयि अग्नावाहुतम् ऋत्विग्भिः प्रक्षिप्तं चरुपुरोडाशादिकं हविः देवा "अदन्ति" भक्षयन्ति, तस्मात्त्वं साधयेत्यर्थः। अपि च त्वम् "आदित्यान्" अदितेः पुत्रान् सर्वान् देवान् "आवह" अस्मद् यज्ञार्थमानय। तान् हि इदानीं वयम् "उश्मसि" कामयामहे। अन्यत् पूर्ववत्॥ [शकेम—शक्लृ शक्तौ (भ्वा० प०), "लिङ्याशिष्यङ्(३,१,८६), अदुपदेशाल्लसार्वधातुकानुदात्तत्वे (६,१,१८६) अङ एव स्वरः शिष्यते। समिधम्—जि इन्धी दीप्तौ (रु० आ०) अस्मात् सम्पदादिलक्षण कर्मणि क्विप्। त्वे—सुपांसुलुगिति (७,१,३९) सप्तम्येकवचनस्य शे-आदेशः। उश्मसि—वश कान्तौ (अदा० प०), "इदन्तोमसि (७,१,४६), अदादित्वाच्छपोलुक् (२,४,७२), ग्रहिज्येत्यादिना सम्प्रसारणम् (६,१,१६)॥३॥७

१२ ३१२ ३२३ १२३१२

॥ समन्तम् ॥ इमꣳस्तोममर्हतेजातवेदसायि। रथ

२ ३ ३ ३ २ १ २

मिव सम्महेमामनीषया। भद्राहार३यिनाः। प्रामतिर

१ १ ३२३ १ २ १ ३ २३ १३ २ १

स्यसꣳस। द्यग्नायि ॥(१) भरामेध्मङ्कृणवामाहवीꣳषिता

* "धीः"—इति कर्मनामसु एकविंशतितमं नैघण्टुकम् (२,१)।

र २र २
यि। चितयन्तःपर्वणापर्वणावयाम्। जीवातार३वायि।
१ २र र र १ २१र २र १
प्रातरा(ं)साधयाधि। योग्ना।यि॥(२) ग्नकेमत्वासमिध(ं)
२र १ र ३ १ १र र र र
साधयाधियाः। त्वेदेवाहविरदन्त्याहुताम्। तुवमा२३
२ १ र २ र १ १ १र
दी। त्वा(ं)आवहतान्ह्युम। स्यग्नायिसाख्या। औ
२ ३र २ १र २ १ २ २
हो३४वाहायि। मा। रायिषार३मा२। होवा२हायि।
१ २ १
वयन्तार३वा३४२। ओ२३४५ई। डा(३)॥ १५ *॥ ७

अथ द्वितीय-तृचे—

प्रथमा।

१ २ १ २३१ २ ३१२ ३ १ २
प्रतिवा(ं)सूरउदिते मित्रङ्गृणीषे वरुणम्।
३ १ २ ३ १ २
अर्यमण(ं)रिशादसम्॥ १ †॥

हे मित्रावरुणौ! "मित्रं" त्वां "वरुणं" च "वां" युवां "रिशा-दसं" शत्रूणामत्तारम् "अर्यमणं" च "प्रति" प्रत्येकं "गृणीषे"

* ऊ० गा० १७प्र० १ख० १५ सा०।

† ऋ० वे० ५, ५, ८, २।

स्तुवे। कदा? इति, उच्यते—"सूरे" सूर्ये देवे "उदिते" सति प्रातरित्यर्थः॥ १॥

अथ द्वितीया।

३ १ २ १ २ ३ २ ३ १ २ ३ २ ३ १ २

राया हिरण्यया मतिरियमवृकाय शवसे।

३ १ १ २र ३ १ २

इयं विप्रा मेधसातये॥ २ *॥

"हिरण्यया" हित-रमणीयेन "राया" धनेन सहितया "अवृकाय" अहिंस्राय "शवसे" अस्माकं बलाय "इयम्" इदानीं क्रियमाणा "मतिः" स्तुतिर्भवत्विति शेषः॥ [ हिरण्यया—इत्यत्र सुपां सुलुगिति (७,१,३९) तृतीयैकवचनस्य याजादेशः ] किञ्च हे "विप्राः" प्रज्ञाः! "इयम्" एव स्तुतिः "मेधसातये" यज्ञ-लाभाय† च भवतु॥ २॥

अथ तृतीया।

१ २ ३ १ २ १ १ २ ३ २

ते स्याम देव वरुण ते मित्र सूरिभिः सह।

२ ३क २र

इषꣳ स्वश्च धीमहि॥ ३ ‡॥ ८

हे "देव वरुण!" "ते" वयं तव स्तोतारः "स्याम" समृद्धा भवेम। न केवलं वयमेव यजमानाः किन्तु "सूरिभिः"

---

* ऋ० वे० ५, ५, ९, ३।

† 'विप्राः—ऋत्विजः, मेधसातये—मेधालाभार्थम्'—इति वि०।

‡ ऋ० वे० ५, ५, ९, ४।

स्तोतृभिः ऋत्विग्भिः सह; तथा हे "मित्र" देव! "ते" वयं "सूरिभिः" सह "स्याम" भवेम। किञ्च "इषम्" अन्नं "स्वश्च" स्वर्गञ्च "धीमहि" धारयामहे* ॥ ३ ॥ ८

अथ तृचात्मके तृतीय-सूक्ते—

प्रथमा।

३ २उ ३ २ ३ २ ३ २ ३१ २ ३१ २र
भिन्धिविश्वाअपद्विषःपरिबाधोजहीमृधः।

१ २ ३ १र २र
वसुस्पार्हन्तदाभर ॥ १ † ॥

हे इन्द्र! त्वं "विश्वाः" सर्वाः "द्विषः" द्वेष्ट्रीः शत्रुसेनाः "अप भिन्धि" विदारय। तथा "बाधः" हिंसकान् "मृधः" सङ्ग्रामान् त्वं "परि जहि" परिभावय। हे सोम वासकेन्द्र! "स्पार्हं" स्पृहणीयं द्वेष्ट्रीणां "वसु" धनं यदस्ति "तत्" "आभर" ॥ १ ॥

अथ द्वितीया।

१ १ १ २ ३ १र २र ३ १ ३ १ २
यस्यतेविश्वमानुषग्भूरेर्दत्तस्यवेदति।

१ १ ३ १र २र
वसुस्पार्हन्तदाभर ॥ २ ‡ ॥

हे इन्द्र! "ते" त्वां [ विभक्ति-व्यत्ययः (३,१,८५) ] "दत्तस्य" दत्तं "भूरि" बहु "यस्य" यत् धनम् [ सर्वत्र कर्मणि षष्ठी वेदि-

* 'स्वः—स्वर्गलोकम्, धीमहि—चिन्तयामः'—इति वि०।

† छ० आ० १, १, ४, १० ( १भा० ३१९ प० )=ऋ० वे० ६, ३, ४९, ४।

‡ ऋ० वे० ६, ३, ४९, ५।

तव्या ] "विश्व" सर्वं तद्धनम् "आनुषक्"—इति आनुपूर्व्या*
सततं सर्वो मनुष्यो "विदति" जानाति तत् "स्पार्हं" स्पृहणीयं
"वसु" "आभर" ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ २ ३१र २र ३१२
यद्वीडाविन्द्रयत्स्थिरेयत्पर्शानेपराभृतम्।
१ २ २ १र २र
वसुस्पार्हंतदाभर ॥ ३ † ॥ ९

हे "इन्द्र!" त्वया च "वीड़ौ" दृढ़े परैः कम्पयितुमशक्ये
"यत्" धनं "पराभृतं" विन्यस्तं, "यत्" च "स्थिरे" स्वयमचले
पराभृतं, "यत्" च "विपर्शाने" विमर्शन-क्षमे पराभृतं, तत्
"स्पार्हं" स्पृहणीयं "वसु" "आ भर" आहर ॥ ३ ॥ ९

अथ तृचात्मकं चतुर्थं सूक्तम्—

तत्र, प्रथमा।

२ २ १ २उ २ १ ३ २ ३ १ २३१ २
यज्ञस्यहिस्थऋत्विजासस्नीवाजेषुकर्म्मसु।
१ १ ३ १ २
इन्द्राग्नीतस्यबोधतम् ॥ १ ‡ ॥

---

* "आनुषगिति नामानुपूर्वस्यानुषक्तं भवति, स्तृणन्ति बर्हिरानुषगित्यपि निगमो भवति"—इति निरु० नै० ६, १४।

† ऐ० आ० ३, १, २, ४ (१भा० ४४० पृ०)=ऋ० वे० ६, ३, ४९, १।

‡ ऋ० वे० ६, ३, २०, १।

हे "इन्द्राग्नी !" युवां "यज्ञस्य" ज्योतिष्टोमादेः "ऋत्विजा स्थः" ऋत्विजौः ऋतौ काले काले यष्टव्यौ भवथः। अतो "वाजेषु" सङ्ग्रामेषु कर्मसु यज्ञात्मकेषु च "सखी" संजातौ सखी सन्तौ* "तस्य" तं मां हे इन्द्राग्नी। बोधतम् अथवा तस्य मम† स्तुतिं जानीतम् ॥ १ ॥

अथ द्वितीया।

१ १ २ ३ १ २ ३ १ २र
तोशासारथयावानावृत्रहणापराजिता।

१ २ ३ १ १
इन्द्राग्नीतस्यबोधतम् ॥ २ ‡ ॥

हे "इन्द्राग्नी !" "तोशासा"¶ शत्रून् हिंसन्तौ, "रथयावाना" रथेन गच्छन्तौ, "वृत्रहणा" वृत्रस्य हन्तारौ "अपराजिता" केनाप्यपराजितौ "तस्य" तं मां "बोधतम्" ॥ २ ॥

अथ तृतीया।

२ १ २ ३१र २र३ १ २ ३ १ २
इदंवाम्मदिरम्मध्वधुक्षन्नद्रिभिर्नरः।

१ २ ३ १ २
इन्द्राग्नीतस्यबोधतम् ॥ ३ § ॥ १०

---

* 'सखी—साधन-स्वभावः'—इति वि०।

† 'तस्य—यजमानस्य'—इति वि०।

‡ ऋ० वे० ६, ३, २०, १।

¶ 'तोशासा—दीप्ति-सम्पन्नौ'—इति वि०।

§ ऋ० वे० ६, ३, १०, ३।

हे "इन्द्राग्नी!" "वां" युवाम् उद्दिश्य "नरः" यज्ञस्य नेतारः "अद्रिभिः" ग्रावभिः "मदिर" मदकरं "मधु" सोमात्मकम् अमृतम् "अचन्" अपूरयन्। सिद्धमन्यत्॥ ३ ॥ १०

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य तृतीयः खण्डः* ॥ ३ ॥

---

अथेन्द्रायेन्दोमरुत्वतइति-चतुर्थखण्डे†—

तृचात्मके प्रथम-सूक्ते‡ प्रथमा।

१ २ ३ १ २ ३ १ २ ३ २
इन्द्रायेन्दोमरुत्वतेपवस्वमधुमत्तमः।
३ २ ३ १ २ ३ १ २
अर्कस्ययोनिमासदम्॥ १ ¶॥

हे "इन्दो" सोम! "मधुमत्तमः" अतिशयेन मधुमान् त्वम् "अर्कस्य" अर्चनीयस्य यज्ञस्य "योनिम्" स्थानम् "आसदम्" उपवेष्टुम् "मरुत्वते इन्द्राय" इन्द्रार्थम् "पवस्व" चर॥ १॥

अथ द्वितीया।

२ ३ १ २ ३ २ ३ १ २ ३ २
तन्त्वाविप्रावचोविदःपरिष्कृण्वन्तिधर्णसिम्।
१ २ ३ १ २
सन्त्वामृजन्त्यायवः॥ २ §॥

---

* 'उक्तं प्रातःसवनम्'—इति वि०।

† 'इदानीं माध्यन्दिनं सवनमुच्यते'—इति वि०।

‡ 'इषोवृधीय-प्रभृतीनि सामानि, तेषां प्रकृतावार्षेयमुक्तम्'—इति वि०।

¶ छ० आ० ५, २, ४, ६ (२भा० १९ पृ०) = ऋ० वे० ७, १, ४०, १।

§ ऋ० वे० ७, १, ४०, २।

हे सोम ! "तं" पवमानं "त्वा" त्वाम् "धर्णसिं" धर्त्तारं "विप्राः" प्राज्ञाः "वचोविदः" स्तोतारः* "परिष्कृण्वन्ति" अलङ्कुर्वन्ति† । अपि च "त्वा" त्वाम्" "आयवः" मनुष्याः‡ "सम्मृजन्ति" सम्यक् शोधयन्ति ॥ २ ॥

अथ तृतीया ।

१ २   ३ १ ३ ३ १   २र ३ १ २
रसन्तेमित्रोअर्यमापिबन्तुवरुणःकवे ।
१ २   ३ १ २
पवमानस्यमरुतः ॥ ३ ¶ ॥ ११

हे "कवे" क्रान्तकर्मन् सोम ! "पवमानस्य" चरतः "ते" तव रसं§ "मित्रः" "अर्यमा" च "वरुणः" च "मरुतः" च एते सर्वे देवाः "पिबन्तु" ॥ ३ ॥ ११

२ र र   १
॥ इषोवृधीयम् ॥ इन्द्रायेन्द्राउ । मरुत्वतायि ।
२ १   १   २ १   १ र
पवस्वामा२ । धुमत्तमाः । अर्कस्यायो२ । निमा ।
१ ३ ५र र   २ र   र १
स्यारदा२३४औहोवा ॥(१) तन्त्वाविप्राः । वचोविदाः ।

---

* विप्रा वचोविदः—मेधाविनः ऋत्विजः'—इति वि० ।

† 'परिष्कृण्वन्ति—परिचरन्ति'—इति वि० ।

‡ "आयवः"—इति मनुष्य-नामासु सप्तदशं नैघण्टुकम् ( २, ३ ) ।

¶ ऋ० वे० ७, १, ४०, ५ ।

§ 'रसं वीर्यम्'—इति वि० ।

२ १ १ २२ १ १
परिष्कार्णवा २। तिधर्णसायिम्। सन्त्वामार्जा २। ति

२ ३ ५र २ २र २
आ। या२वा२ ३ ४ औहोवा ॥(२) रसन्तेमायि। चो

१ २ १ १ २ १
अर्य्यमा। पिवन्त्वा २। वृणः कवायि। पवमाना २।

१ ३ ५र २ १ र २
स्यम। क्र२ता२३४औहोवा। वृषोवृधे१(३) ॥ १८ * ॥ [१]

२ र २ २ ५ २
॥ गायत्रीकौस्वम् ॥ इन्द्रायेन्दा१औहो। मा ३ रु

३ ५ १ २१ २ ५ २ २ ५
त्वा२३४तायि। पावस्वामा। धू३म। ता २ ३ ४माः।

१ ५ ३ ५ १ र
माः। पवस्वमधुमा३२। ता२३४माः। अर्कस्ययोना२

४ ५ १ ५र
३यिम। च। वाहायि। सा२३४दाम्। एहियाई

५ २ र २ ५ २ २ ५
हा ॥(१) तन्त्वाविप्रा १ औहो। वा३। चो। वी२३४दाः।

१ २ १ २ २ ३ ५ १
पारिष्काण्वा। ता३यिधा। णा२३४सायिम्। परिष्कृ

५ ३ ५ १ र
ण्वन्तिधा३२। णा२३४सायिम्। सन्त्वामृजन्ता२३यि।

४ ५ १ ५र ५ २
च। वाहायि। या२३४वाः। एहियाई३हा ॥(२) रस

* ऊ० गा० २ प्र० १ अ० १९ खा०।

र २ ऽ २३ ५ १ २१२ ऽ२
न्तेमा१औहो। ओ३अर्या२३४मा। पायिवन्तुवा। रू३णः।

३ ५ १ ४ ३ ५ १
का२३४वायि। पिवन्तुवरुणा३२ः। का२३४वायि। पव

र ५ १ ५र
मानस्या२३। म। वाहायि। रू२३४ताः। एहिया६

५ ४
हा। होपुई। डा(३)॥ २० *॥ [२]

२ र ३ १ ३
॥ वाजदावदावयम्॥ इन्द्रायेन्दाउ। मरू२त्वा२३

५ १ ३ ५ २१ १ २
४तायि। पवा२स्वा२३४मा। धुमत्ता२माः। आ२३र्का।

१ २१ ५ ४ ५ २र
स्या२यो। निमो२३४वा। सा५दो६हायि॥(१) तन्त्वा

१ ३ ५ १ ३ ५
विप्राः। वचो२वी२३४दाः। परा२यिष्का २ ३ ४ एवा।

२१ १ २ १ २१
तिधर्णा२सायिम्। सा२३न्त्वा। मा२र्जा। तियो२३४

५ ४ ५ २र १र ३
वा। या५वो६हायि॥(२) रसन्तेमायि। ओआ२र्या

५ १ ३ ५ २१ १ २
२३४मा। पिबा२न्तू२३४वा। रुणःका२वायि। पा२३वा।

१ २१ ५ ४ ५
मा२ना। स्यमो२३४वा। रू५तो६हायि(३)॥ २१ †॥[३]

* ऊ० गा० ३प्र० १अ० १०सा०।

† ऊ० गा० ३प्र० १अ० ११सा०।

२ ३र ४ ५ र र
॥ आश्वसूक्तम् ॥ आऔहोवाहायि । इन्द्रायेन्दा
२ १ र २र र ३र २ २ १ ३
उ । मरू । त्वते । ऐहीयैही१ । पावस्वमधुमात्तमः ।
र र २र २ १ १र
ऐहीयैही१ । आ२यि । आकी२स्यायो२ । निमा ।
३ ५र र २ ३र ४ ५ र
सा२दा२३४औहोवा ॥(१) आऔहोवाहायि । तन्त्वा
२ १ २र र ३र २ २
विप्राः । वचो । विदः । ऐहीयैही१ । परिष्कृण्वन्ति
१ २र र २ र १ १
धार्णसिम् । ऐहीयैही१ । आ२यि । सान्त्वा२माजा
१र ३ ५र र २ ३र ४
२ । तिआ । या२वा२३४औहोवा ॥(२) आऔहोवा
५ र २ र १ र २र र ३र २
हायि । रसन्तेमायि । त्तोआ । यमा । ऐहीयही१ ।
१ २ १ र २र र ३र २ २
पायिवन्तुवरुणाःकवे । ऐहीयैही१ । आ२यि । पावा
१ १ ३ ५र र २ १ र २
२माना२ । स्वम । रू२ता२३४औहोवा । शुक्रआज्ञ
२ १ १ १ १
ता२३४५ः(३) ॥ ४ * ॥ [४]

५ र २ ४र ५ २ १
॥ आमहीय्यम् ॥ इन्द्रायाऽ३यिन्द्रोमरुत्वतायि । पवा

* ऊ० गा० ६प्र० १अ० ४सा० ।

स्वा१मा२। धुमा२३त्तमाः। अर्कस्ययो। निमा२३स
दाउ। वा३। स्तोषे३४५(१) ॥ ४ * ॥ [५]

॥ दार्ढच्युतम् ॥ इन्द्रा। इहा। येन्दोमरु२त्वता
यि। इहा। पवा। इहा। स्वमधुमा२त्तमाः। इ
हा। अर्का। इहा। स्ययोनिमा२सदाम्। इहा१ ॥(१)
तन्त्वा। इहा। विप्रावचो२विदाः। इहा। परायि।
इहा। कृण्वन्तिधा२र्णसायिम्। इहा। सन्त्वा। इ
हा। मृजन्तिआ२यवाः। इहा१ ॥(२) रसाम्। इ
हा। तेमित्रोआ२र्य्यमा। इहा। पिबा। इहा। तु
वरुणा२ःकवायि। इहा। पवा। इहा। मानस्यमा
२रुताः। इहा१(३) ॥ १२ † ॥ [६]

---

* ऊ० गा० १०प्र० २ख० ४सा०।

† ऊ० गा० १६प्र० १ख० १३सा०।

१ र र र र १ ॰
॥ वारवन्तीयोत्तरम् ॥ इन्द्रायेन्दाऔहोहायि । मा

२ ५ २ १ ५ २ १ २
रुत्वा२३४तायि । पवास्वा२३४हायि । मधुमत्ता २ ४ ।

३र ४र ५ १ २ ५ २ २ ५ २ १ २
आहोवा । इहा२३४हायि । उहुवा२३४माः । अर्कस्य ।

१ ७र २ ३र ४र ५ १ २ ५ ३र २
योनिमासा३४ । औहोवा । इहा२३४हायि । औहो

५र ५ २ र र र १
३१२३४ । दाम् । एहियाईहा ॥(१) तन्त्वाविप्राऔहो

२ २ ५ २ १ ५ १
हायि । वाचोवी२३४दाः । परायिष्का२३४हा । एवन्ति

२ ३र ४र ५ १ २ ५ २ २ ५
धर्णा३४ । औहोवा । इहा२३४हायि । उहुवा२३४सोम् ।

२ १ २ १ ७ र २ ३र ४र ५ १ २
सन्त्वामृ । जान्तिआया३४ । औहोवा । इहा २ ३ ४

५ ३र २ ५र ५ २
हायि । औहो३१२३४ । वाः । एहियाईहा ॥(२) रस

र र र १ २ २ ५ २ १
न्तोमा । औहोहायि । चोअर्षा२३४मा । पिबातू२३

५ १ २ ३र ४र ५ १ २ ५
४हायि । बहणःका३४ । औहोवा । इहा२३४हायि ।

२ २ ५ २ १ १र १ ७ २ ३र ४र ५
उहुवा२३४वायि । पवमा । नास्यमहू ३४ । औहोवा ।

१ २ ५ ३२ २ ५र ५
इहार२३४हायि । औहो३१२३४ । नाः । एहियाइहा ।
४
हौ५इ । डा(३) ॥ १६ * ॥ [७]

१२र १ र २ र १ २ २
॥ इन्द्रवद्वामदेव्यम् ॥ तन्त्वाविप्रावचोविदः । इहा ।
१ २ १ र
परिष्कृण्वन्ति धर्णसा२यिम् । इहा । सन्त्वामृजन्ता२
१ २ १ ५ ५
यि । इहा३ । या२३४वो६हायि(२) ॥ १८ † ॥ [८]

२ र १ १ १ ३र
॥ मार्गीयवाद्यम् ॥ रसौहोवा । तेमारयि । वो
२ ३ ५ १ १ १ २ १ र
अर्य्या२३४मा । पिबन्तुव । रुणाःका१वा२यि । पव ।
२ २ ३ ५ १ ३ ५र र २
औ३होयि । मा२३४ना । स्या२मा२३४औहोवा । ए३ ।
१ १ १ १ १
रुता२३४५ः(३) ॥ २० ‡ ॥ [९] ११

* ऊ० गा० २१प्र० २ख० १६सा० ।

† ऊ० गा० २१प्र० १ख० १८सा० ।

‡ ऊ० गा० २१प्र० १ख० २०सा० ।

मृज्यमानेति-प्रगाथात्मकं द्वितीयं सूक्तम्*—

तत्र प्रथमा ।

२ १ २ ३ १र २र
मृज्यमानःसुहस्त्यासमुद्रे वाचमिन्वसि ।
२ २ ३ १ २ ३ १ २र ३ २ ३ १ २ ३क २र
रयिम्पिशङ्गम्बहुलम्पुरुस्पृहम्पवमानाभ्यर्षसि ॥१†॥

हे "सुहस्त्या" [हस्ते भवा हस्त्या अङ्गुलयः] शोभनाङ्गुलिक सोम ! "मृज्यमानः" शोध्यमानः त्वं "समुद्रे" अन्तरिक्षे कलशे वा "वाचं" शब्दम् "इन्वसि" प्रेरयसि । किञ्च हे "पवमान" पूयमान सोम ! "पिशङ्ग" हिरण्यैः पिशङ्गवर्णं "बहुलं" प्रभूतं "पुरुस्पृहं" बहुभिः स्पृहणीयं "रयिं" धनम् "अभ्यर्षसि" स्तोतॄणामभि क्षरसि प्रयच्छसि ॥ १ ॥

अथ द्वितीया ।

२ १उ ३ १ २ ३ २ ३ १ २ ३ १ २
पुनानोवारेपवमानोअव्ययेवृषोअचिक्रदद्वने ।
३ १ २ ३ १र २र २ १
देवानाꣳसोमपवमाननिष्कृतङ्गोभिरञ्जानो
२
अर्षसि ॥ २ ‡ ॥ १२

---

* 'बृहती, औष्णोरम्भ्र-प्रमृतीनि ब्राह्मणोक्तानि'—इति वि० ।

† ऋ० ष्मा० ६, १, १, ७ ( २भा० ३९७पृ० )=ऋ० वे० ७, ५, १६, १ ।

‡ ऋ० वे० ७, ५, १६, २ ।

"अयं" सोमः "वृषः" वृषभसदृशः* सन् "पुनानः" अभिषूयमाणः सर्वं शोधयतु "अव्यये" अविमये "वारे" वाले पवित्रे "पवमानः" पूयमानः सन् "वने"† वननीये "उदके" काष्ठे कलशे वा† "अचिक्रदत्" शब्दमकरोत्। [अथ प्रत्यक्षवादः] हे "सोम। पवमान!" त्वं "गोभिः" गव्यैः क्षीरादिभिः‡ "अञ्जानः" अञ्जमानः¶ सन् "निष्कृतं" संस्कृतं§ देवानां स्थानम् "अर्षसि" गच्छसि ॥ २ ॥ १२

२ र १
॥ औक्ष्णोरन्ध्रम् ॥ मृज्यमानाः। सुहस्तियाऽ३। सा
२ ४ ५ २ १ २ ४ ५ २
मूऽ३द्रायिवा। चमिन्वसाऽ३यि। रायीऽ३ऽ्पायिशा। गव्य
१ ३ ५ १ २र १ २
क्षुलाऽ३म्। पूरुऽ२स्पृऽ२३४हाम्। पवमा। ना। औऽ३
२ ३ ४ ५ २ र
हो। भियोऽ२३४वा। षाऽ५सोऽ६हायि ॥(१) पवमाना।
१ २ ४ ५ २ १ २
भियर्षसाऽ३यि। पावाऽ३माना। भियर्षसाऽ३यि। पूनाऽ३

---

* 'वृषा उ इति पदपूरणः'—इति वि० सम्मतश्चैष छेदः पदकारस्य तथाहि—
१ २र ३
"वृषा। उ"—इति।

† 'वने—काष्ठमये द्रोणकलशे अथवा वने उदके मद्दीभूते'—इति।

‡ 'गोभिः—उदकैः अथवा गो-सम्भूतैः क्षीरैः'—इति वि०।

¶ 'अञ्जानः—मिश्रीयमाणः'—इति वि०।

§ 'निष्कृतं स्थानम'—इति वि०।

४ ५ १र १र ३ ५ १ र २
नोवा। रेपवमा३। नोआ२व्या२३४यायि। वृषोअ।

१ २ २ ५ ४ ५
चा। औ३हो। ऋदो२३४वा। वा५नो६हायि॥(२)

२र १ २ ४ ५ २
वृषोअचायि। ऋददना३यि। वार्षो३आचायि। ऋद

१ २ ४ ५ २ १
दना३यि। दाग्वा३ना॰सो। मपवमा३। नना२यि

३ ५ १र २ १ २ २ १
ष्का२३४र्त्ताम्। गोभिर। जा। औ३हो। नओ२३

५ ४ ५
४वा। षा५सो६हायि(३)॥ १ *॥ [१]

२ १ र र र र
॥ स्वारैडमौक्ष्णोरन्ध्रम्॥ मृज्यमानःसुहस्त्या। समु

१ २ १ २ १ ७ २ २ २
द्रे वोवा। चामिन्वसि। रायिम्पिषङ्गा३। हा३हा।

१ २र २ १ २ १ २ २ २ १
गम्बहुलम्पुरुस्पृहम्। पवमाना३। हा३हा। भियर्षा

१ २र र १ २ र १ २ १ २
२३३यि॥(१) पवमानाभियर्षसि। पवमानोवा। भाय

१र र २ २ २र र २र र १ ३र
र्षसि। पूनानोवा३। हा३हा। रेपवमानोअव्यये।

१र २ २ २ १ ३
वार्षोअचा३यि। हा३हायि। ऋदहा२३ना३४३यि॥(२)

---

* ऊ० गा० ३प्र० १अ० १सा०।

१ र १ १ र २र १ २ १ २र १
वृषोअचिक्रदद्वने । वृषोअचोवा । क्रादद्वने । दायि
र र २ २ २ १ २र १ र
वानाऽसोऽ२ । हाउहा । मपवमाननिष्कृतम् । गोभा
२ १ २ र ५ २ २
यिरञ्जाउ । हाउहा । नोअर्षा२३सा३४३यि । ओ२३
४५ई । डा(३) ॥ २ * ॥ [२]

२ १ र २ १ १
॥ वाजजित् † ॥ मृज्यमानःसुहा । स्तिया२ । समू
१ र १ २र १ १
२हो । द्रेवा२हो । चामिन्वसायि । रया२यिऽहो
१ २ १ २र १
यि । पिशा२हो । गम्वकूलाम् । पूरुस्पृहाम् । पवा
१ र १ २र १ १ १ २र
२हो । माना२हो । ओयर्षसा३१उवा२३ ॥(१) पवमा
र १ १ १ र २र
नामिया । वसा२यि । पवा२हो । माना२हो । औ
१ १ र १ २र १ २र
यर्षसायि । पुना२हो । औवा२हो । र्पवमा । नौ
१ २ २ २र १
अव्ययायि । वृषो२होयि । अचा२यिचोयि । क्राद्
२ १ र २ १
द्वना३१उवा२३ ॥(२) वृषोअचिक्रदात् । वना२यि ।

---

* ऊ० गा० ३प्र० १अ० १सा० ।

† "वार्हद्वाजजितौ द्वारोरब्धम्"—इति ख० पु० पाठः ।

१ १ १ २र १ २ र
वृषो२होयि। अचा२यिहोयि। क्रादद्दनायि। देवा

१ र १ २ १ १र १ र
२हो। ना२सो२हो। मपवमा। नानिष्कृताम्। गों

१ १ १र १ २
भा२यिहोयि। अज्ञा२हो। नोअर्षसा२१उवा२३।

१र १र २ २
वाजीजिगी३वा२१(२) ॥ २ * ॥ [३]

२ र १ २ १ २ १
॥ वरुणसाम ॥ मृज्यमानःसुहस्त्योवा। ओवा। सा

२ र र १ २ १ २ १
मुद्रेवा। घसायिन्वा१सी२। रा२३यीम्। पा२३यि

१ १ २ १ २ १ ५ २ १
शा। गस्वङ्कलम्। पुरू२३हायि। स्पृहा३मा। पव

२र र १ २ १ २ १ र २ ५ २
मानाभियर्षसि। पा२३वा। मानाभियौ३। हो३वो२३

५ ४ ५ २ र र १ २
४। वा। षाधुसो६हायि ॥(१) पवमानाभियर्षसोवा।

१ २ १ २र र १ २ १ २
ओवा। पावमाना। भियार्षा१सा२यि। पू२३ना।

१ २ १र २ र १र २ १ ४ २
नो२३वा। रेपवमा। नोआ२३हायि। व्यया३आ।

१र २ १ २र १ २ १ २ ५ २
वृषोअचिक्रदद्दने। वा२३र्षौ। आचिक्रदौ३। हो३१२३

* ऊ० गा० ३प्र० १ख० ३सा० ।

५ ४ ५ १र १ २
४। वा। वा५नो६हायि ॥(२) वृषोअचिक्रदद्वनोवा।
१ १ १र २ १ २ १ २
ओवा। वार्षोअचि। क्रदाद्दा१ना२यि। दा२३यिवा।
१ २ १ २र १ २ १ ऽ २
ना२३ऽसो। मपवमा। नजा२३हायि। क्रता३ मा।
र २ र १र २ १ २ १ र २ ऽ
गोभिरञ्जानोअर्षसि। गो२३भायिः। आञ्जानओ३।
२ १ ५ ४ ५ १
हो३हो२३४। वा। वा५सो६हायि(३)॥ ४ * ॥ [४]

२ऽ ऽ ऽ १ र
॥ अङ्गिरसाङ्गोष्ठम् ॥ हाउहाउहाउवा। मृज्यमा
२ १र ३ १ १ १ १ २ १ र र
नःसुहस्त्या। इहा। उपा२३४५। समुद्रेवाचमिन्व
१ ३ १ १ १ १ २ १ २ १ २ १ २ १
सि। इहा। उपा२३४५। रयिम्पिशङ्गम्बहुलंपुरुस्पृ
२ १ २ १ १ १ १ १ २र र १ २ १
हम्। इहा। उपा २ ३ ४ ५। पवमानाभियर्षसि। इ
३ १ १ १ १ १ २र र १ २ १
हा। उपा२३४५ ॥(१) पवमानाभियर्षसि। इहा। उ
३ १ १ १ १ १ २र २ १ २ १ ३ १ १ १ १
पा२३४५। पवमानाभियर्षसि। इहा। उपा२३४५।
१र १र र ३ १र र १ २र १ ३ १ १ १ १ १र
पुनानोवारेपवमानोअव्यये। इहा। उपा२३४५। वृषो

* ऊ० गा० ३प्र० १ख० ४गा०।

२ १२र १ ३ १ १ १ १ १र २ १
अचिक्रदद्वने । इट्दा । उपा२३४५ ॥(२) वृषोअचिक्रद

२र १ ३ १ १ १ १ १र २ १२र १
द्वने । इट्दा । उपा२३४५ । वृषोअचिक्रदद्वने । इट्दा ।

३ १ १ १ १ २र१र र २र र १
उपा२३४५ । देवाजा२सोमपवमाननिष्कृतम् । इट्दा ।

३ १ १ १ १ २उ ५ ५ १र १र २र २
उपा२३४५ । हाउद्दाउहाउवा । गोभिरञ्जानोअर्षसि ।

१ ३ १ १ १ १
इट्दा । उपा२३४५(३) ॥ ५ * ॥ [५]

१ १ र २ १ २ १ र २
॥ सम्मतम् ॥ मृज्यमानःसुहस्तिया । समुद्रेवा५च

१ २ १ २ २ १
मिन्वसायि । रयिम्पा२३यिशा । गाम्बङ्कलम् । पुरुस्प

२ २२ १ १र १ १ २ १
हाम । औहो३४वाहायि । प । वामा२३ना३ । हो

२ २ १ २ १ १ २र र १ २ १
वा३हा । भियर्षा२३सा३४३यि ॥(१) पवमानाभियर्षसा

र २ १ २ र र १ २ २र
यि । पुनानो२३वा । रेपवमा । नोआव्यायां । औ

१ ७ २र २ १ २ १ २ २
हो३वाहायि । वृ । षोआ२३चा३यि । चोवा३हायि ।

१ १ र २ १२१ र
आदद्वा२३ना३४३यि ॥(२) वृषोअचिक्रदद्वनायि । वृषो

* ऊ० गा० ६प्र० २अ० ५सा० ।

२ १ २ र २ १ २र
अचायिक्रदद्वनायि। देवाना२३९सो। मापवमा। न
१ ३ ३र २ ७र २ १र
मायिष्कार्त्ताम्। औहो३४वाहायि। गो। भायिरा
२ १ २ २ र १ २ १
२३ज्ञा३। होवा३हा। नोअषा२३सा३४३यि। औ
२३४५ई। डा(३) ॥ ५ * ॥ [६]

२ र र र १ २
॥ त्रिणिधनमायास्यम्॥ मृज्यमानःसुहाहाउहोवा।
१ २ २ ५ २र २ २ २
स्तायासा२३४मू। द्रेवा२। चमा३४५यि। न्वार३४
१ २ ३र ४र ५ १ २
सी। रया३४। औहोवा। पिशङ्गम्बङ्गलार्म्। पुरु
३ ५ १ २ ३र ४र ५ १
३४५। स्पृ२३४हाम्। पवा३४। औहोवा। मानार।
३ २ ५ ५ २ र र र र १ २
भिया३४५। षा२३४सी ॥(१) पवमानाभियाहाउहोवा।
१ २ ३ ५ १र ३ ३ ५
षासायिपा२३४वा। माना२। भिया३४५। षा२३४सी।
१ २ ३र ४र ५ १र र र ७र २
पुना३४। औहोवा। नोवारेपवमा२। नोआ३४५।
३ ५ १ २ ३र ४ ५ १ ३ २
व्या२३४ये। वृषो३४। औहोवा। आचा३यि। क्रदा

* ऊ० गा० ८प्र० १ख० ५सा०।

१ ५ २र र १२ १
३४५त् । वार३४ने ॥(२) वृषोअचिक्रदद्वाउवोवा । वा ।
२ १ ५ १ ३१ ३
वार्मायिवा२३र्षा । अचार२यि । क्रदा३४५त् । वार३४
५ ४ १ ३र४र ५ १रर ३१
ने । देवा३४ । औहोवा । ना॑सोमपवमा२ । नना
३ ५ १र२ ३र४र५ १
३४५यिः । का२३४र्त्ताम् । गोभा३४ । औहोवा । आ
३ २ ३ ५
ञ्जा२ । नआ३४५ । षा३४५ । षार३४सो(३) ॥ ६* ॥[७]

५४ २ ४ ५ ४ ५ १ १र
॥ अभीवर्त्तम् ॥ पवा३मा३नाऽभियर्षसोवा । पावमा
र १ २ १ र र २ ३र ४५र
ना । भियार्षा१सा२यि । पूनानोवा३१२३४ । रेपवमा ।
२र१ २ १ २ ३ २ १
नोआव्या१या२यि । वृषोआ१चा२यि । क्रदा३त् । वा
३ १ १ १ १
२३४५ । ना२३४५यि(२) ॥ ८ † ॥ [८]

५ र २ ४ ५ ४ ५ २ १ २ १
॥ कालेयम्‡ ॥ वृषोआ३चिक्रददनायि । वृषोअचा
२ ३२ १ २र ३रर २ १ ३
यि । क्रददना२३यि । देवाना॑मो३ । मा२३४ । पव

* ऊ० गा० ८प्र० १अ० ६सा० ।

† ऊ० गा० ८प्र० १अ० ८सा० ।

‡ "महाकालेयम्"—इति ख० पु० पाठः ।

४र ५ २ २ १र ३ २ २
मानन्निः। क्रा३न्त्तीम्। गोभायिरजौ। वा३४३। औ
५ ४र ४
३४वा। नोआपुर्षसायि। होप्५ई। डा(३) ॥ ९ ॥ [९]

५ ४ ५र ३र २ ३र ४र ५ १
॥ पौरुमीढम् ॥ पवमा। नाभा३४औहोवा। आ
२ १ १र र १ २ १र र र
र्षसि। पवमाना। भियर्षा२३सायि। पुनानोवा। रे
२ र १ र २ १
पवा२३मा। नोअव्ययायि। वृषोआ२३चायि। क्रद
१ २ १ १ १ १ १
दा२३४५नाइ५इयि। दत्ता३या२३४५(२) ॥ १२ † ॥ [१०]

१ऽ ऽ ऽ र
॥ आङ्गिरसाङ्गोष्टम्* ॥ हाउहाउहाउवा। पुना
१र र २र १ २र र १ २र १ ३ १ १ १ १ १ र १
नोवारेपवमानोअव्यये। इद्दा। उपा२३४५। वृषोअ
१ १र १ २ १ १ १ १ २र १र र २र
चिक्रदद्वने। इद्दा। उपा२३४५। देवानाꣳसोमपव
र १ २ १ १ १ १ २ऽ ऽ ऽ
मानन्निष्क्रतम्। इद्दा। उपा२३४५। हाउहाउहाउ

---

* ऊ० गा० ८प्र० २ख० ९सा०।

† ऊ० गा० ६प्र० २ख० १२सा०।

‡ 'प्रतोदगोष्टम्''—इति ख० पु० पाठः।

१र २ र १र २ १ ३ १ १ १
वा। गोभिरञ्जानोअर्षसि। इहा। उपा २३४

१
५(२) ॥ ५* ॥ [११]

२र १र२र १२१ २१र
॥ कण्वरथन्तरम् ॥ पावमानाभियर्षसायि। पवमा

२ १ २ २ र र र र र र ९
ना। भा३यार्षा३सायि। पुनानोवारेपवमानोअव्यया

५र २१र ५ २ १
२३४ऐही। वृषोआ२३४चायि। क्रदा३१उवा२३। ए३।

१३१
वनआ(२) ॥ १४ † ॥ [१२]

२र १११ १२१ २१र
॥ कण्वरथन्तरम् ॥ मार्ज्यमानःसुहस्तिया। समुद्रे

२ १ २ २
वा। चा३मायिन्वा३सायि। रयिम्पिशङ्गम्बहु लम्पुरुस्पृ

३ ५र २१ ५ २ २
हा२३४मैही। पवमा२३४ना। भिया३१उवा२३। ए३।

२३२
षसआ(१) ॥ ७ ‡ ॥ [१३]

२१ र१ १र
॥ अर्कपुष्पोत्तरम् ॥ मृज्यमानःसुहस्त्या। उवायि।

* ऊ० गा० १८प्र० २ख० ५सा०।

† ऊ० गा० १८प्र० २ख० १४सा०।

‡ ऊ०गा० २०प्र० २ख० ७सा०।

२र १ १२र २ १ २र १
औहोवा२। समुद्रं वाचमिन्वसि। ऊवायि। औहो

१ २ १ २ १ २ १ २ १ २र
वा२। रयिम्पिशङ्गम्बहुलम्पुरुस्पृहम्। ऊवायि। औ

१ १ २र र १ २ १ २र र
होवा२। पवमानाभियर्षसि। ऊवायि। औ। हो२।

३ ५र र १ २र र १ २ १
वा२३४। औहोवा॥(१) पवमानाभियर्षसि। ऊवायि।

२र १ र ५र र र२र १ २र र १ ३र १
औहोवा२। पुनानोवारेपवमानोअव्यये। ऊवायि।

२र १ १ र २ १ २र १ २र १
औहोवा२। वृषोअचिक्रदद्वने। ऊवायि। औ। हो२।

३ ५र र १ र २ १ २र १
वा२३४। औहोवा॥(२) वृषोअचिक्रदद्वने। ऊवायि।

२र १ १ र २ १ २र १ २र १
औहोवा२। वृषोअचिक्रदद्वने। ऊवायि। औहोवा

र १र र २र र २ २र
२। देवानाꣳसोमपवमाननिष्कृतम्। ऊवायि। औ

१ १र २ र १र २ १ २र १
होवा२। गोभिरञ्जानोअर्षसि। ऊवायि। औ। हो२।

३ ५र र २ १ २ र१र २ १र ३ १ १
वा२३४ औहोवा। अर्कस्यदेवाःपरमेवियो२मा २ ३

१ १
४५न३)॥८*॥[१४] १२

* ऊ० गा० ८प्र० २अ० ८सा०।

एतमुत्यमिति तृचात्मकं तृतीयं सूक्तम्—

तत्र, प्रथमा।

३ २ ३ २उ ३ १ २ ३ १ ३ १ २
एतमुत्यन्दशक्षिपोमृजन्तिसिन्धुमातरम्।
१ १ ३ १ २
समादित्येभिरख्यत ॥ १ * ॥

"सिन्धुमातरं" यस्य सोमस्य सिन्धवो† नव‡ मातरो भवन्ति। "त्यं" तम् "एतम्" इमम् सोमं "दश क्षिपः" दशसङ्ख्याका अङ्गुलयो¶ "मृजन्ति" शोधयन्ति। अपि च सोऽयम् "आदित्येभिः"§ आदित्यैः "समख्यत" सङ्गच्छते ॥ १ ॥

अथ द्वितीया।

१ २र ३ २ ३ १ २ ३ १ २ ३ २ ३ २
समिन्द्रेणोतवायुनासुतएतिपवित्रआ।
१ २र ३ १ २
सꣳसूर्य्यस्यरश्मिभिः ॥ २ ‖ ॥

* ऋ० वे० ७, १, १९, १।

† "सिन्धवः"—इति निघण्टु-प्रथम-त्रयोदशे नदीनामसु पठितम्।

‡ —तास्र नव "इमम्मे गङ्गे (१, ६, ७, ५)"—इति बह्वृच्श्रुता ज्ञेयाः। तथाहि—गङ्गा, यमुना, सरस्वती, शुतुद्री, परुष्णी (इरावती), असिक्नी, मरुद्वृधा, वितस्ता, आर्जिकीया (विपाट);—इत्येता नव।

¶ "क्षिपः"—इति निघण्टावङ्गुलिनामसु तृतीयम् (२, ५)।

§ "बहुलञ्छन्दसि (७, १, १०)"—इति भिस ऐसभावः।

‖ ऋ० वे० ७, १, १९, २।

"सुतः" अभिषुतः सोमः "पवित्रे" "इन्द्रेण" "सम् एति" सङ्गच्छते। "उत" अपि च "वायुना" समेति "सूर्य्यस्य "रश्मिभिः" किरणैरपि समेति ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
सनोभगायवायवेपूष्णेपवस्वमधुमान्।
१ २ ३ १ २र
चारुर्मित्रेवरुणेच ॥ ३ * ॥ १३

हे सोम! "मधुमान्" मधुररसः "चारुः" कल्याण-रूपश्च सोऽभिषुतः त्वं "नः" अस्माकम् यज्ञे "भगाय" भगाख्याय देवाय "वायवे" "पूष्णे" च "मित्रे" मित्राय देवाय "वरुणाय" च "पवस्व" चर ॥ ३ ॥ १३

२र १ २ १ २ १ २ १ २
॥ इहवद्वामदेव्यम् ॥ एतमुत्यन्दशक्षिपः। इहा। मृ
१ र १ २ १ र र १ २
जन्तिसिन्धुमातरा २म्। इहा। समादित्येभिरा २। इहा
१ ५ ५ १ र र २र १ २र १ २र २
३। ख्या२३४तोइहायि ॥(१) समिन्द्रेणोतवायुना। इ
२ १ र १ २ १ र
हा। सुतएतिपवित्रआ २। इहा। सꣳसूर्य्यस्यरा २।
१ २ १ ५ ५ १ २र १ र २ र १ २र
इहा३। श्मा२३४यिभो६हायि ॥(२) सनोभगायवायव।

* ऋ० वे० ७, १, १९, ४।

१ २१ १र १ २ १र र
इहा । पूष्णे पवस्वमधुमा २न् । इहा । चारुर्म्मित्रेव

१ २ १ ५ ५
रु २ । इहा३ । णा२३४यिचो६हायि(३) ॥ ६ * ॥ [१]

५र ४ २ ४ ५ २ १
॥ अयासोमीयम ॥ एता३मू३त्यन्द३ चिपाः । मृज

० ३ ५ १ २र १
न्तिसायि । धुमा२ता२३४राम् । सामादित्या२३यि ।

२ ४ ५ ४ २ ४र ५र २
भिरा३स्व्या५ता६५६ ॥(१) समा३यिन्द्रे३णोतवायुना । सु

१र ० ३ ५ १ २र १
तएनायि । पवा२यित्रा२ ३ ४ आ । सा२सूरिया २ ३ ।

२ ४ ५ ४ २ ४र ५र
स्यरा३स्सा५यिमा६५६यिः ॥(१) सनो३मा३गायवायवायि ।

२र १र ० ३ ५ १ २ १
पूष्णेपवा । स्वमा२धू२३४मान् । चारुर्म्मि त्रा २ ३ यि ।

२ ४
वरु३णा५यिचा६५६(३) ॥ १४ † ॥ [२] १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य
चतुर्थः खण्डः ‡ ॥ ४ ॥

---

* ऊ० गा० ३प्र० २अ० ७सा० ।

† ऊ० गा० १२प्र० २अ० १४सा० ।

‡ "उक्तो माध्यन्दिनः पवमानः"—इति वि० ।

अथ पञ्चमे खण्डे*—

'रेवतीर्न'-इति तृचात्मकं† प्रथमं सूक्तम्—

तत्र, प्रथमा ।

१र २ ३ १ ३ १ २ ३ १ २
रेवतीर्नःसधमादइन्द्रे सन्तुतुविवाजाः ।
३ १ २ १ ३ १ २
क्षुमन्तोयाभिर्मदेम ॥ १‡ ॥

"क्षुमन्तः" अन्नवन्तः "याभिः" गोभिः सह "मदेम" हृष्येम "इन्द्रे" "सधमादे" अस्माभिः सह हर्षयुक्ते सति "नः" अस्माकं ता गावः "रेवतीः" क्षीराज्यादि-धनवत्यः "तुविवाजाः" प्रभूत-बलाश्च "सन्तु" ॥ [रेवतीः—रयि-शब्दात् मतुपि "रयेर्मतौ बहुलम् ( ६, १, ३४ वा० )" —इति सम्प्रसारणम्, परपूर्वत्वे, "छन्दसीरः ( ८, २, १५ )"—इति मतुपो वत्वम्, "वाच्छन्दसि ( ६, १, १०६ )"—इति पूर्वसवर्णदीर्घः, "रे-शब्दाच्च मतुप उदात्तत्वं वक्तव्यम ( ६, १. १७६ वा० )"—इति रे-शब्दादुत्तरस्यापि भवतीति पूर्वमेवोक्तम् । सधमादे—मद तृप्ति योगे चौरादिकः, सह मादयतीति सधमादः "सधमादस्थयोश्छन्दसि ( ६, ३, ९६ )"—इति सह-शब्दस्य सध आदेशः, थाथादिना ( ६, २, १४४ )—उत्तर-पदान्तोदात्तत्वे प्राप्ते "परादिश्छन्दसि

---

* 'इदानीं इष्टानि'—इति वि० ।

† 'रेवतीषु वारवन्तीयं इष्ठ' भवति'—इति वि० ।

‡ छ० आ० २, २, १, ९ (१मा० ३५३पृ०)=ऋ० वे० १,१,२०,३ ।

बहुलम् ( ६, २, १९९ )"—इति उत्तरपदाद्युदात्तत्वम्। तुविवाजाः—बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ( ८, २, १ )। द्युमन्तः—दु द्यु रु कु शब्दे ( अदा० प० ), अस्मात् क्विपि तुगभावश्छान्दसः, "ह्रस्वनुड्भ्यां मतुप् ( ६, १, १७६ )"—इति मतुप उदात्तत्वम्। मदेम—मदी हर्षे ( दि० प० ), व्यत्ययेन शप्, अदुपदेशाल्लसार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तत्वम्, ततो धातुस्वरः शिष्यते ॥ १ ॥

अथ द्वितीया।

२ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
आघत्वावांत्मनायुक्तःस्तोतृभ्योधृष्णवीयानः ।

३ २उ ३ २ ३१ २ ३१ २
ऋणोरक्षन्नचक्रयोः ॥ २ * ॥

हे "धृष्णो !" धार्ष्ट्यगुणेन्द्र !† "त्वावान्" त्वत्सदृशो देवताविशेषः, "त्मना" आत्मना अस्मदनुग्रह-बुद्ध्या युक्तः "ईयानः" अस्माभिर्याच्यमानः "स्तोतृभ्यः" स्तोतॄणामनुग्रहाय तदभीष्टमर्थं "घ" अवश्यम्‡ "आ ऋणोः" आनीय प्रक्षिपतु। तत्र दृष्टान्तः—"चक्रयोः" रथस्य चक्रयोः "अक्षं न" यथा अक्षं प्रक्षिपति तद्वत् ॥ त्वावान् वतुप्प्रकरणे "युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्या

* ऋ० वे० १,३,३०,४ ।

† 'धृष्णो—धारण-स्वभावः'—इति वि० ।

‡ 'घ—इति पद-पूरणः'—इति वि० ।

नम् ( ५ २,६४ वा० )"—इति वतुप् "प्रत्ययोत्तर-पदयोश्च ( ७, २, ६८ )"—इति मपर्यन्तस्य त्वादेशः, "आ सर्वनाम्नः ( ६, ३, ६१ )"—इति दकारस्यात्वं, वतुपः पित्त्वादनुदात्तत्वे ( ३, १, ४ ) प्रातिपदिक-स्वरः शिष्यते । त्मना—"मन्त्रेष्वाङ्यादेरात्मनः (६, ४, १४१ )"—इत्याकार-लोपः । धृष्णो—ञि धृषा प्रागल्भ्ये, "त्रसिगृधि-धृषि-क्षिपेः क्नुः, आमन्त्रितानुदात्तत्वम् । ईयानः-ईङ् गतौ, ( दि० आ० )छन्दसि लिट् ( ३, २, १०५ ), तस्य "लिटः कानज्वा ( ३, २, १०७ )" —इति कानजादेशः, "अचिश्नु धातु ( ६, ४, ७७ )"—इत्यादिना इयङादेशः,"चितः ( ६, १, १६३ )"—इत्यन्तोदात्तत्वम् । ऋणोः—ऋण गतौ ( तना० उ० ) लङि व्यत्ययेन तिपः सिपि ( ३, १, ८५ ), "इतश्च ( ३, ४, ९७ )"—इतीकारलोपः, "तनादि-कृञ्भ्य उः ( ३, १, ७९ )",—सार्वधातुकगुणः ( ७, ३, ८४ ), "बहुलञ्छन्दस्यमाङ्योगेऽपि"--इत्यडागमाभावः, विकरण-स्वरेणान्तोदात्तत्वम् । अत्तम्—"अत्तस्यादेवनस्य ( फि० २, १२ )"—इत्याद्युदात्तत्वम् । चक्रोः—अकारस्यैकारश्छान्दसः ( ३, १, ८५ )" ॥ २ ॥

अथ तृतीया ।

१र २र ३१र ०र ३२
आयद्द्वः शतक्रतवा कामञ्जरितृणाम् ।
३२उ ३१र २र
ऋणोरक्षन्नशचीभिः ॥ ३ * ॥ १४

हे "शतक्रतो" इन्द्र ! "यत्" "दुवः" धनं कामितार्थ-

* ऋ० वे० १,२,३,५ ।

रूपम् स्तोतृभिः आसव्यमस्ति तं कामं "जरितृणां" स्तोतृणामनुग्रहाय "आ ऋणोः" आनीय प्रक्षिपसि। तत्र दृष्टान्तः—"शचीभिः" कर्मभिः शकटोचित-व्यापार-विशेषैः "अक्षं न" यथा अक्षं प्रक्षिपति तद्वत् ॥ [शचीभिः—शची-शब्दः शार्ङ्गरवादित्वात् (४, १, ७३) ङीबन्तत्वादाद्युदात्तः (३, १, ४)॥ ३ ॥१४

२ २र २ र १ २
॥ वारवन्तीयोत्तरम् ॥ रेवतीर्नऔहोहायि। सा
३ ५ २ २ १ ५ १ २
धामार२३४दायि। इन्द्रायिसा२३४हा। तुतुविवा३४।
३र ४र ५ २ ३ ५ २ ३ ५ २ १
औहोवा। इहा२३४हायि। उक्षवा२३४जाः। क्षुम
२ १ ७ २ ३र ४र ५ १ ३ ५
न्तः। याभिर्मदा३४। औहोवा। इहा२३४हायि।
३र २ ५र ५ २र र र
औहो३१२३४। मा। एहियाइहा ॥(१) आघत्वावा०९
र १ २ ३ ५ २र १ ५
औहाहायि। त्मानायू२३४क्ताः। स्तोतृभ्योर२३४हायि।
१ र २ २र ४र ५ १ ३ ५ २ र
धृष्णुवीया३४। औहोवा। इहा२३४हायि। उक्षवा
५ २ १र २ १ ७ २ ३र ४र ५ १ ३
२३४नाः। ऋणोर। हान्नचक्रा३४। औहोवा। इहा
५ ३र २ ५र ५
२३४हायि। औहो३१२३४। योः। एहियाइहा ॥(२)

२र र र १ २ ३ ५ २र १
आयद्वाऔहोहायि। भातक्का२३४ताउ। आकामा२३

५ १ १ ३र ४र ५ १ ३ ५
४५हायि। जरितृ३४। औहोवा। इहा२३४हायि।

२ ३ ५ २ १र २ १ ७ २ ३र २र ५
उक्थवा२३४णाम्। ऋणोर। चान्नशचा३४। औहोवा।

१ ३ ५ ३र २ ५र ५
इहा२३४हायि। औहो३१२३४। भीः। एहियाईहा।

४
होऽ५ई। डा(३)॥ ७ *॥ [१] १४

सुरूपकृत्नुमिति तृचात्मकं द्वितीयं सूक्तम्,

तत्र, प्रथमा।

२ ३ १ २ ३ १ २ ३ १ २
सुरूपकृत्नुमूतये सुदुघामिव गोदुहे।
२ ३ २ ३ २
जुहूमसि द्यविद्यवि॥ १ †॥

"सुरूपकृत्नुं" शोभन-रूपोपेतस्य कर्मणः कर्त्तारमिन्द्रं "ऊतये" अस्मद्रक्षणार्थम् "द्यवि द्यवि" प्रतिदिनं "जुहूमसि" आह्वयामः॥ [द्यो-शब्दः प्रातिपदिक-स्वरेणान्तोदात्तः(फि० १,१), "नित्य वीप्सयोः(८,१,४)"—इति द्विर्भावः, 'तस्यपरमाम्रेडितम्

---

* ऊ० गा० ३प्र० २ख० ७गा०।

† ऋ० आ० २,२,२,१ (१भा० २६६पृ०) = ऋ० वे० १,४,७,१।

(८, १, २) "अनुदात्तञ्च (८, १, २)"—इति द्वितीयस्यानुदात्तत्वम् । जुहूमसि—इत्यत्र "इदन्तोमसि (७, १, ४६)"—इति इकार आगमः, प्रत्यय-स्वरेण (३, १, ३) इकारउदात्तः] आह्वाने दृष्टान्तः—"गोदुहे" गोधुगर्थं [ गां दोग्धीति गोधुक्; सत्सूद्विषेत्यादिना (३, २, ६१) क्विप्, कृदुत्तरप्रकृतिस्वरत्वम् (६,२, १३९)] "सुदुघाम् इव" सुष्ठु दोग्ध्रीं गामिव यथा लोके यो दोग्धा तदर्थं तस्य आभिमुख्येन दोहनीयां गामाह्वयन्ति तद्वत् [सुष्ठु दुग्धे इति सुदुघा, "दुहः कब्घश्च (३,२,७०)"—इति कप् प्रत्ययः हकारस्य च घकारः, कित्वाद् गुणाभावः (१, १, ५), कपः पित्वादनुदात्तत्वे धातुस्वरेणोकार उदात्तः(६,१,१६२)॥१॥

अथ द्वितीया ।

१ २ ३ २ ३ १ २ ३ १ २
उपनःसवनागहिसोमस्यसोमपाःपिब ।
३ २उ ३ २ ३ १ २
गोदाइद्रेवतोमदः ॥ २ * ॥

हे "सोमपाः" सोमस्य पातरिन्द्र ! सोमं पातुं "नः" अस्मदीयानि "सवना" सवनानि त्रीणि "उप" समीपे "आ गहि" आगच्छ [ सवना—सूयते सोम एष्विति सवनानि सुपो डादेशः(७,१,३९) टिलोपश्च(६,४,१४३),"लिति(६,१,१९३)-इति प्रत्ययात् पूर्वस्या-"

* ऋ० वे० १,४,७,२ ।

कारस्य उदात्तत्वम्। गहि—इत्यत्र गमेः "बहुलम्छन्दसि (२,४, ७३)—इति शपो लुक्, हेर्ङित्त्वादनुदात्तोपदेशेत्यादिना (६,४,३७) मकार-लोपः, "अतोहेः (६,४,१०५)"—इत्याभीय-शास्त्रीरे लुकि कर्त्तव्ये "असिद्धवदत्राभात् (६,४,२२)"—इति आभाच्छास्त्रीयो मकार-लोपोऽसिद्धवद् भवति]। आगत्य च "सोमस्य" सोमं "पिब", "रेवतः" धनवतः तव "मदः" हर्षः "गोदा इत्" गोप्रद एव, त्वयि हृष्टे सति अस्माभिर्गावो लभ्यन्त इत्यर्थः ॥२॥

अथ तृतीया।

१ २ ३ १ २ १ १ २ ३ २
अथाते अन्तमानांविद्यामसुमतीनाम्।
२ ३ १ २ ३ १ २
मानोअतिख्यआगहि ॥ ३ * ॥ १५

"अथ" सोमपानानन्तरं हे इन्द्र! "ते" तव "अन्तमानाम्" अन्तिकतमानामतिशयेन तव समीपवर्त्तिनां "सुमतीनां" शोभन-मति-युक्तानां शोभन-प्रज्ञानां पुरुषाणां मध्ये स्थित्वा "विद्याम" वयं त्वां जानीयाम [यद्वा, सुमतीनां शोभन-बुद्धीनां कर्मानुष्ठान-विषयाणां लाभार्थमित्यध्याहारः बहुव्रीहि-पक्षे पूर्वपद-प्रकृति-स्वरापवादो "नञ्-सुभ्याम् (६,२,१७२)"—इत्युत्तर-पदान्तोदात्तः। कर्मधारय-पक्षेऽपि अव्यय-पूर्वपद-प्रकृति-स्वरापवाद-क्तत्स्वरेणान्तोदात्ततैव (६,२,१३९)। अतो मतुपि ह्रस्वादन्तोदात्ताच्च सुमति-शब्दात् परस्य नामो "नाम-

* ऋ० वे० १, ४, ७, ३।

न्यतरस्याम् (६,१,१७७)"—इत्युदात्तत्वम् ]। त्वमपि "नः" अस्मान् "अति" अतिक्रम्य "माख्यः" अन्येषां त्वत्स्वरूपं मा प्रकथयः [ख्या प्रकथने (अदा० प०)—इत्यस्य लुङि "अस्यतिवक्तिख्यातिभ्योऽङ् (३,१,५२)"। आगहि—गमेः शपो लुकि ङित्त्वादनुदात्तोपदेशेति (६,४,३७) मकार-लोपस्यासिद्धवदत्राभादिति (६,४,२२) असिद्धवद्भावात् "अतो हेः (६,४,१०५)"—इति लुङ् न भवति ॥ ३ ॥ १५

उभेयदिन्द्ररोदसीति-तृचात्मकं तृतीयं सूक्तं;

तत्र, प्रथमा ।

३ १र २र ३ १ २ ३ २ ३ १ २
उभेयदिन्द्ररोदसीआपप्राथोषाइव।

३ १ २ ३ १ २ ३ १ ३ ३ २
महान्तन्त्वामहीनाꣳसम्राजञ्चर्षणीनाम् ॥

३ १र २र ३ १र २र
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ १ * ॥

हे "इन्द्र!" "उभे" "रोदसी" द्यावापृथिव्यौ "यत्" यः त्वम् "आ पप्राथ" स्वतेजसा आपूरयसि [प्रा पूरणे, आदादिकः (५०). छान्दसो लिट् (३,२,१०५)] "उषा इव" यथा उषाः स्व-भासा सर्वं जगदापूरयति तद्वत् त्वं "महीनां" महतां देवानामपि "महान्तम्" अधिकं "चर्षणीनां" मनुष्याणामपि

* ऋ० आ० ४,१,४,१० (१भा० ७७७पृ०)=ऋ० वे० ८,७,२२,१।

"सम्राजम्" ईश्वरम् इन्द्रं "त्वा" त्वाम् "देवी" देवनशीला "जनित्री" साधु-जनयित्री अदितिः "अजीजनत्" अतः कारणात् सा "भद्रा" कल्याणी प्रशस्ता "जाता" [ जनेर्ण्यन्तात् साधुकारिणि तृन् (३,२,१३४), "जनिता मन्त्रे (६,४,५३)"—इति इडादौ णि-लोपो निपात्यते, ऋन्नेभ्यइति ङीप् ( ४, १, ५ ) ॥ १ ॥

अथ द्वितीया ।

३ २   २ ३ १ २ ३ २   ३   १ २
दीर्घꣳह्यङ्कुशंयथाशक्तिम्बिभर्षिमन्तुमः ।
१ २   २ २   ३ २ ३ १र   २र
पूर्वेणमघवन्पदावयामजोयथायमः ।
३१र   २र   ३ १र   २र
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ २ * ॥

"दीर्घम्" आयतम् "अङ्कुशं" सृणिं "यथा बिभर्षि" एवमायतां "शक्तिं" हे "मन्तुमः" मन्तु ज्ञाने, तद्वन् ! ["मतुवसो रुः (८, ३, १ )"—इति सम्बुद्धौ नकारस्य रुत्वम्] ईदृशेन्द्र ! बिभर्षि धारयसि [डु भृञ् धारण-पोषणयोः जौहोत्यादिकः, श्लौ "भृञामित् ( ७, ४, ७६ )"—इत्यभ्यासस्येत्वम् ] हे "मघवन्" धनवन्निन्द्र ! यथा "पूर्वेण" देहस्य पूर्वभागे वर्त्तमानेन "पदा"

* ऋ० वे० ८, ७, १९, ५ ।

पादेन "अजः" छागः "वयां" शाखां आकर्षति तथा पूर्वोक्तया शक्त्या आक्रष्यामः शत्रून् [नियच्छसि--यमेर्लेटयड़ागमः, "बहुलं छन्दसि (२, ४, ७३)"—इति शपो लुक्]। गतमन्यत् ॥ २ ॥

अथ तृतीया ।

१ १ ३ १२ २२ ३ २
अवस्मदुर्हणायतोमर्त्तस्यतनुहिस्थिरम् ।
३ १२ २२ ३ २ ३ १ २ ३ १ २
अधस्पदन्तमीङ्कृधियोअस्माँ अभिदासति ॥
३ १२ २२ ३ १२ २२
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ ३* ॥१६

"दुर्हणायतः" दुःखप्रद-हरणमाचरतः "मर्त्तस्य" मनुष्यस्य शत्रोः "स्थिरं" दृढं बलम् "अव तनुहि" अवततं नीचीनं कुरु। "स्म"—इति पूरकः। "तम्" शत्रुम् "ईम्" एनम् अधस्पदं पादयोरधस्ताद्वर्त्तमानं "कृधि" कुरु। "यः" शत्रुः "अस्मान्" "अभिदासति" उपक्षिपति†। समानमन्यत् ॥३॥१६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

* ऋ० वे० ८, ७, २१, ३ ।

† 'अभिदासति—हिंसां करोति'—इति वि० ।

अथ षष्ठे खण्डे*—

परिस्वानइति-तृचात्मके प्रथमं सूक्तम्,

तत्र, प्रथमा।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
परिस्वानोगिरिष्ठाःपवित्रेसोमोअक्षरत्।
१ २ ३ १ २
मदेषुसर्वधाअसि॥ १ †॥

अयं "सोमः" "पवित्रे" दशापवित्रे "पर्यक्षरत्" परितः क्षरति। कीदृशः सन्? "स्वानः" शब्दायमानः ["सुवानः"-इति बह्वृचानां पाठः] सूयमानः "गिरिष्ठाः" गिरिस्थायी ग्रावसु वर्त्तमान इत्यर्थः। हे सोम! स त्वं "मदेषु" मादकेषु सोमेषु "सर्वधा असि" सर्वस्य धाता दाता च भवसि॥ १॥

अथ द्वितीया।

२उ ३ १ ३ २उ ३ १ २ ३ १र २र
त्वंविप्रस्त्वङ्कविर्मधुप्रजातमन्धसः।
१ २ ३ १ २
मदेषुसर्वधाअसि॥ २ ‡॥

---

* "इदानीमार्भवो वक्तव्यः। तत्र च वैदन्वत-प्रभृतीनि सामानि, ब्राह्मणोक्तार्थानि'—इति वि०।

† ऋ० आ० ५,२.४,९ (२भा० २६पृ०) = ऋ० वे० ६,८,८,१।

‡ ऋ० वे० ६,८,८,२।

हे सोम! "त्वं" "विप्रः" विविधं प्रीणयिता विप्रसदृशो वा त्वञ्च "कविः" मेधावी, अतस्त्वम् "अन्धसः" अन्नात् जातं "मधु" मधुरसं प्रयच्छसीति शेषः ॥ २ ॥

अथ तृतीया।

१र २र३ १ २ ३ १२ ३ १२
त्वेविश्वसजोषसोदेवासःपीतिमाशत।

१ २ ३ १ २
मदेषुसवधाअसि ॥ ३ * ॥ १७

हे सोम! "त्वे" त्वयि "पीतिं" पानं "विश्वेदेवासः" सर्वे देवाः "सजोषसः" समान-प्रीतयः सन्त "आशत" प्राप्नुवन् ॥ ३ ॥ १७

३ २ ४ १ ४
॥ तृतीयंवैदन्वतम् ॥ पाऽ५रि। स्वानो३गा३यिरि

५ २ १ १र१र १र ३ २१ २१र२ १
ष्ठाः। पवित्रेसो। मोअक्षरात्। पवित्रे। सोमो२३।

४ ५ ३ ४ २ ४ ५ २ १
क्षारात् ॥(१) तूऽ५वम्। विप्रा३स्तू३वङ्कवायिः। मधु

२ १ २ २ २ १ २ १ र ४ ५
प्रजा। तमन्धसाः। मधुप्रजा। तमा२३। धासाः ॥(१)

० र ४ २ ४र ५ २र१र २ १ २ ३र
तूऽ५वे। विश्वे३सा३जोषसाः। देवासःपायि। तिमा

* ऋ० वे० ६, ८, ८, ३।

२१ १२२ २ १ ४ ५ १
शता। देवेसःपी। तिमा२३। शाता। औयि।

२ २ ५ २१ ३ १२
मदौ। वा३४३औ३४वा। धुवा। सर्वधाः। असायि।

३ ५२ २ २ २ १२ ३११११
मा२दा२३४औहोवा। ए३। धुसर्वधाअसी२३४५॥८*॥[१]

१२ २२ २ १
॥ वैदन्वताद्यम्॥ पारौ। स्वानोगिरिष्ठाः। पवा

३ ५ १२ १ १२
२यिन्ने२३४सो। मोअहारा२त्॥(१) तूवाम्। विप्र

१ २ ५ २ १
स्त्वङ्कविः। मधू२प्रा२३४जा। तमन्वामासा२ः॥(२)

१२ २ २ १२ ३ ५ २२ १
तूवे। विश्वेसजोषसः। देवा२सा२३५ःपी। तिमाशा

१ २ ५ २ ३१ ५ ४
ता२। मदायिषूसा३। ई३या३। वंधो२३४वा। आ

५
५सो६हायि॥ ८ † ॥ [२]

५ २ १ १३२ २ १
॥ चतुर्थवैदन्वतम्॥ औ३होयि। इहहाहहायि।

३ ५ २ २ ५ २ ३ ५
औ२हो२३४वा। परायिस्वा२३४नो। गिरा२३४यिष्ठाः।

* क० गा० ३प्र० २खा० ८षा०।

† क० गा० ३प्र० २खा० ९षा०।

२ १ ५ १ ३ ५ २ ३
पावित्रे२३४सो । सोअस्मा२३४रात् ॥(१) तुवंवा२३४यि

५ २ ३ ५ २ ३ ५ २ १
प्रः । तुवङ्का२३४वीः । मधुप्रा२३४जा । तमन्धा२३४

५ २ ३ ५ २ ३ ५ २र ३
साः ॥(२) तुवँवा२३४यिश्वे । सजोषा२३४साः । देवासा

५ २ ३ ५ १ २ ५ २
२३४:पी । तिमांग्रा२३४ता । मदायिषू२३४सा । वँधा

१ ५ ऽ २ १ २२र २ १ ३
आ२३४सी । औ३होयि । इहवाहवायि । औ२होर

२ १२ ११११
३४५वा६५६ । ए३ । उपा२३४५(३) ॥ १० * ॥ [३]

२ र १ २र १
॥ ऐध्मवाहाद्यम् ॥ परिस्तुवाइहा । नोगायि । रा

२ १ ५ ३ ५ १ र र र ऽ १ २
यिष्ठाओ२३४वा । ई२३४हा । पवित्रेसोमो३आ । हा

३ ५ ३ ५ २ १ २ १
रादो२३४वा । ई२३४हा ॥(१) तुवंविप्रइहा । तुवाम् ।

२ ३ ५ ३ ५ २ र ऽ१
कावाओ२३४वा । ई२३४हा । मधुप्रजाता३मा । धा

२ १ ५ ३ ५ २र १ २ १
साओ२३४वा । ई२३४हा ॥(२) तुवेविश्वइहा । सजो ।

२ १ ५ ३ ५ २रर र १
षासाओ२३४वा । ई२३४हा । देवासःपीती३मा । ग्रा

* ऊ० गा० ३प्र० २अ० १०सा०

ताओ२३४वा । ई२३४द्वा । म्दायि । पूसाओ२३४वा । ई२३४द्वा । वंधाः । वंधा२आ२३४५सा६५६यि । ई२३४द्वा(३) ॥ ८ * ॥ [४]

॥ सत्त्वितम् ॥ परिस्तुवानः । गा२यिरिष्ठाः । पवा२यि । त्रे२३सो । मोआ२ह्मारात् । तुवंविप्रस्तु । या२कवायिः । मध२ । प्रा२३जा । तमा२न्धासाः । तुवेविश्वे स । जो२षसाः । देवा२ । सा२३ःपी । तिमा२श्माता । मा२३दायि । पू२सा । वंधा२३ः । हाउवा३ । आ२३४सो(३) ॥ ६ * ॥ [५]

॥ जराबोधीयम् ॥ परिस्तुवोवा । नोगिरिष्ठाः । पवायित्रे२३सो । मोअ्द्यारात् ॥(१) तुवंविप्रोवा । तूवङ्कवायिः । मधूप्रा२३जा । तमन्धासाः ॥(२) तुवेविश्वो

* ऊ० गा० ८प्र० १ख० ६सा० ।
† ऊ० गा० ८प्र० १ख० ६सा० ।

वा। साजोषसाः। देवासा२३:पी। तिमाशाता। मदायिषू१सा२३र्वा। धाः। असो३४५ई। डा(३)॥१८*॥[६]

॥सुरूपोत्तरम्॥ परिसुवौहो२। इया। नोगिराियिष्ठा२ः। पवित्रेसौहो२। इया। मोअच्छारा२त्॥(१) तुवंविप्रौहो२। इया। तुवङ्कावा२यिः। मधुप्रजौहो२। इया। तमन्धासा२ः॥(२) तुवेविश्वौहो२। इया। सजोषासा२ः। देवासःपौहो२। इया। तिमाद्माता२। मदेषुसौहो२। इया। वंधाआ२३सा३४३यि। ओ२३४५ई। डा(३)॥२†॥[७]

॥हाविष्मतम्॥ हाउपरिस्वानोगिरिष्ठाहाउ। पवित्रेसो३। मोअच्छा२३४रात्॥(१) हाउतुवंविप्रस्तुवङ्कविर्हाउ। मधुप्रजा३। तामन्धा२३४साः॥(२) हाउ

* ऊ० गा० १२प्र०१ अ० १८सा०।

† ऊ० गा० १४प्र० १अ० १३सा०।

र र र र २र १र १ १ २ ३
तुवे विश्वे सजोषसो२हा३उ । देवासःपी३ । तायिमाशा२

५ २ १ २ २ १र
३४ता । ऐ२हो१आ२३यिहो । मदायिषू३सा । वंधाः ।

३ ५र र २ १ ३ १ १ १ १
आ२सा२३४औहोवा । हविष्मते२३४५(३) ॥ ८ * ॥ [८]

३ ४ ५ र र २ ३ ५
॥ प्राम्मदम् ॥ परिसुवानऐ । होऐहो२ ३ ४ या ।

१ १ ऽ २ १ र र र १
गिरिष्ठाऐ२होऐ२हो३या । पवित्रे सोमो अक्षरद्ऐ२होऐ

ऽ २ ३ ४ ५ र २ ३ ५ २
२हो३या ॥(१) तुवंविप्रस्तुऐ । होऐहो२३४या । वङ्क

१ ऽ २ १ र १ २
विरै२होऐ२हो३या । मधुप्रजातमन्धसऐ२हो३या ॥(२)

२५र ५ र र २ ३ ५ १र ऽ २
तुवे विश्वे सऐ । होऐहो२३४या । जोषसऐ२हो३या ।

१र र र र १ ऽ २ १ २
देवासःपीतिमाशतऐ२होऐ२हो३या । मादायिषुसा३१

२ १ ५ ४
२३ । वंधो२३४वा । आपुसौ६हायि(३) ॥ ८ † ॥ [८]

---

* ऊ० गा० १५प्र० १ख० ८सा० ।

† ऊ० गा० १५प्र० १ख० ९सा० ।

२ १ ४र र ५

॥ दावसुनिधनम् ॥ परिस्रुवार३नोगिरिष्ठाहाउ ।

१ २र र र १ २ १ ९ २

प।वित्रे सो । मोआक्षा१रा२३त् । होवा३हायि ॥(१)

१ ४ ५ १ २र १ २

तुवंवार३यिप्रस्तुवङ्कविर्हाउ । माधुप्रजा । तमान्धा१

१ २ २ २ १र ४र र

सा२३ः । होवा३हायि ॥(२) तुवेवार३यिश्वे सजोहाउ ।

१ र २ र १ र १ २ २ १

हायिवासःपी । तिमाआ१ता२३ । होवा३हायि । म

२ १ ९ २ १र ३

दायिषू१सा२३ । होवा३हा । वंधाः । आ२सा२३४

५र र २ २र १ ३ १ १ १ १

औहोवा । ए३ । दावसू२३४५(३) ॥ १० * ॥ [१०]

१ २ ९

॥ प्रतीचीनेडङ्काशीतम् ॥ परिस्रुवानः । गा२यिरि

१ २र र र १ ७ ६र १

ष्ठाः । पावित्रे सो । मोआहरा२३४त् । हाहोयि ॥(१)

१ २ १ २र १ ७

तुवविप्रस्तु । वा२ङ्कवायिः । माधुप्रजा । तमान्धसा

५र २ १ र २ र १

२३४ः । हाहोयि ॥(२) तुवे विश्वे स । जो२षसाः । हा

* ऊ० गा० १५प्र० १अ० १०सा० ।

र २ र १ ७ ३र २ १ र २
यिवासःपो। तिमाशता२३४। हाहोयि। मदेषुसार्वा

२ १ २ ४ ५ ४ ५
३धाः। असा। औ३होवा। ई३डा(३)॥ ११ * ॥[११]

२ र र र र १ २
॥ हाविष्कृतम्॥ परिसुवानोगाहाउरायिष्ठाः। प

१ र र २ र
वित्रे सो। मोआहार३रात्॥(१) तुवंविप्रस्तुव९हाउ

१ २ १ २ २ र
कावायिः। मधुप्रजा। तमन्धा२३साः॥(२) तुवेवि

र र र १ २ र १र र २
श्वे सजोहाउषासाः। देवासःपायि। तिमाशा२३ता।

१ २ १र ३ ५र
मदा२होइयि। षू२३सा। वंधाः। आ२सा२३४ औ

र २ १ ३ १ १ १ २
होवा। हविष्कृते२३४५(३)॥ १२ † ॥ [१२]

१ २र १र र र २
॥ गौषूक्तम्॥ परिसुवानोगौ। हौहोवाहायि। रि

१ र र २ १ १
ष्ठाः। पवित्रे सोमऔ२। ऊवायि। ऊवा२यि। हा

१ ३ १ र र २ २
रा२त्॥(१) तुवंविप्रस्तुवौ। हौहोवाहायि। कवायिः।

---

* ऊ० गा० १५प्र० १ख० ११सा०।

† ऊ० गा० १५प्र० १ख० १२सा०।

मधुप्रजातमौ२। ऊवायि। ऊवा२यि। धासा२ः॥(२)

तुवेविश्वे सजौ। हौहोवाहायि। षसाः। देवासःपी

तिमौ२। ऊवायि। ऊवा२यि। भ्राता२। मदेषुस

र्वधौ२। ऊवायि। ऊवा२यि। भ्राता२। मदेषुस

र्वधौ२। ऊवायि। ऊवा२यि। आसा२३यि। द्यो

२वा२३४औहोवा। अग्निराऊता२३४५ः(३)॥ ७*॥[१३]१७

ससुन्वे–इति-प्रगाथात्मकं द्वितीयं सूक्तम्,

तत्र, प्रथमा।

ससुन्वेयोवसूनांयोरायामानेतायइडानाम्।

सोमोयस्सुक्षितीनाम्॥ १ †॥

"सः" सोमः "सुन्वे" अभिषुवे ऋत्विग्भिः, यः सोमः वसूनां धनानाम् "आनेता", यश्च "रायां" रान्ति प्रयच्छन्ति क्षीरादिकमिति रायो गावः तेषा मानेता, यश्च "इडानाम्" अन्नानाञ्च, यश्च सोमः "सुक्षितीनां" सुनिवासानां शोभन-मनुष्य-युक्तानां गृहाणाम् आनेता विद्यते, सोऽभिषुतोऽभूदिति॥ १॥

* ऊ० गा० १ प्र० २ख० ७सा०।

† छ० आ० ६, २, ४, ५ (२भा० २३३पृ०)=ऋ० वे० ७, ५, १८, १।

अथ द्वितीया ।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ ३ १ १ ३ १ ३ १ २
यस्यतइन्द्रःपिबाद्यस्यमरुतोयस्यवार्यमणाभगः ।

१ २र ३ १र २र ३ १ २ ३ २ ३ १ २ ३ १
आयेनमित्रावरुणाकरामहएन्द्रमवसेमहे ॥ २ ॥ १८

हे सोम! "यस्य" प्रसिद्धस्य "ते" तव रसम् "इन्द्रः" "पिबात्" पिबति [ पा पाने (भ्वा० प०), लेटयड़ागमः ] "यस्य" यञ्च सोमं "मरुतः" पिबन्ति, "वा" अपिच "अर्यमणा"† एतन्नामकेन देवेन सह "भगः"‡ देवः "यस्य" यं सोमं पिबति, "येन" सोमेन "मित्रावरुणा"¶ मित्रावरुणौ वयम् "आ करामहे" अभिमुखीकुर्म्महे। तथा "महे" महते "अवसे" रक्षणाय येन च सोमेन "इन्द्रम्" अभिमुखीकुर्महे, तं त्वाम-भिषुणोमीत्यर्थः ॥ २ ॥ १८

१ २ १र र २ १
॥ दीर्घम् ॥ सासू । न्वेयोवसू२३नाम् । योरा२

१ र र १ २ १ २ १ २
यामा२ । नेतायइडा२३नाम् । सो२३माः । यःसुक्षि

---

* ऋ० वे० ७, ५, १९, ४ ।

† सुपांसुलुगित्याले ( ७, १, ३९ ) रूपम् ।

‡ "भगो व्याख्यातः ( ३, १६ )। तस्य कालः प्रागुत्सर्पणात् तस्यैषा भवति— *** । अन्धो भग इत्याहुरनुत्सृप्तो न दृश्यते। प्राशित्र मस्याक्षिणी निर्जघानेति च ब्राह्मणं जनं गच्छतीति वा जनं गच्छत्यादित्य उदयेन"—इति निरु० द० ६, १३-१४ ।

१ ५ ५ १ १ १
तार३४यिनो६हायि ॥(१) सोमाः। यःसुन्वितार ३ यि

२ १ १ २ १ १ १
नाम्। यास्या२ताई२। द्रःपिबाद्यस्यमद्द्र२३ताः। या

१ २ १ १ १ २
स्या२ताई२। द्रःपिबाद्यस्यमद्द्र२३ताः। यार ३ स्या।

१२ २ १२ ५ ५ १ २ १२ २
वार्य्यमणाभा २ ३ ४गो६हायि ॥(२) यास्या। वार्यमणा

२ १ १ १२ २ १ १२ २
भा२३गाः। आये२नामी२। त्रावरुणाकरामार२३हा

१ १ २ २ १२ २ १
यि। आये२नामी२। त्रावरुणाकरामार२३हायि। आ

२ १ २२ १ ५ ५
२३यिन्द्राम्। अवसेमार३४ह्वो६हायि(३)॥ ११* ॥ [१]

१ १ २ ४ २ २ ५ १२ १
॥ सफम्॥ ससुन्वे३यः। वासू२३४नाम्। योरा

२ १ १ २ २ ५ १२
या२म्। आनायिता३या३ः। इडा३२३ ४ नाम्। सो

१ २ ४ २ ५
नाः। याःसू३क्षी३। ता३४५यिनो६हायि(१) ॥१४†॥[२]१८

---

* ऊ० गा० ३प्र० २अ० ११सा०।

† ऊ० गा० ११प्र० १अ० १४सा०।

तंवइति-तृचात्मकं तृतीयं सूक्तम् ;

तत्र, प्रथमा।

१ १ २ ११ ३ २३ १२
तंवःसखायोमदायपुनानमभिगायत।
२ ३ १२३ १ २ ३ १ २
शिशुंनहव्यैःस्वदयन्तगूर्त्तिभिः॥ १ * ॥

हे "सखायः" ऋत्विजः! "वः" यूयं "मदाय" देवानां मदार्थं "पुनानं" पूयमानं तं सोमम् "अभि गायत" अभिष्टुत। "तम्" इमं सोमं "शिशुं न" शिशुमिव अलङ्कारैः क्षीरादिभिश्च स्वादूकुर्वन्ति, तद्वत् "हव्यै" हविर्भिः मिश्रणैः "गूर्त्तिभिः" स्तुतिभिश्च "स्वदयन्त" स्वादूकूर्वन्ति ॥ १ ॥

अथ द्वितीया।

१ ३ १ १ ३ २ ३ १ २ २ १ २
संवत्सइवमातृभिरिन्दुर्हिन्वानोअज्यते।
३ १२ ३१२ २ ३ १ २
देवावीर्मदोमतिभिःपरिष्कृतः॥ २ † ॥

"हिन्वानः" प्रेर्य्यमाणः "इन्दुः" सोमः वसतीवरीभिः "समज्यते" सम्यक् सिक्तो भवति ‡। तत्र दृष्टान्तः—"वत्स-

* ऋ० सा० ६, १, १, ४ (२भा० १०८पृ०) = ऋ० वे० ७, ५, ८, १।

† ऋ० वे० ७, ५, ८, २।

‡ 'इन्दुः हिन्वानः वाच्यमानः, अज्यते यज्ञ अपरे मनीषिभिः'—इति वि०

इव" वत्सो यथा "मातृभिः"* गोभिः समक्तो भवति, तद्वत्। कीदृशः? "देवावीः" देवानां रक्षकः, "मदः" मदकरः "मतिभिः" स्तुतिभिः "परिष्कृतः" अलङ्कृतः [ भूषणार्थे "सम्पर्युपेभ्यः (६, १, १३७)"—इति सुडागमः, "परिनिविभ्यः (८,३,७०)"—इति सुटः षत्वम् ॥ २ ॥

अथ तृतीया।

१ १र २र ३ १ २ ३ १र २र ३ १ २
अयन्दक्षायसाधनोयꣳशर्धायवीतये।

३ २ ३ २ ३ १ २ ३ २
अयन्देवेभ्योमधुमत्तरःसुतः ॥ ३ † ॥ १९

"अयं" सोमः "दक्षाय" बलाय वर्द्धनाय वा "साधनः" साधयिता भवति, तथा "अयं" सोमः "शर्द्धाय" बलाय "वीतये" देवानां भक्षणार्थं च भवति, "सुतः" अभिषुतः, "अयं" सोमः "देवेभ्यः" इन्द्रादिभ्यः "मधुमत्तरः" अतिशयेन माधुर्य-युक्तो भवति अत्यन्तं मदकरो भवतीति वा ॥ ३ ॥ १९

३ १ ५ २
॥ कार्ण्श्रवसम् ॥ तां२३४वः। सा२३४खा। सा२

५ २र १ २ १र १ र २
३४खा। योमदा२३या। पूनानम। भिगाया२३ता।

---

* 'मातृभिः—तृतीया-बहुवचनमिदं चतुर्थी-बहुवचनस्य स्थाने द्रष्टव्यम्'-इति वि०।

† ऋ० वे० ७, ५, ८, ३।

१ २ १ २ २र १ १ २ १र २
शायिष्टुन्नह। व्यःस्वदया२३। तगूर्त्तिभा३४३यिः॥(१)

३ ५ १ ५ ११र २ १
सा२३४व। त्सा२३४ई। वमातृ२३भायिः। आयिन्दु

२ र र १ २ १ २र१र २र ३ २
र्विश्वा। नोअज्या२३तायि। दायिवावीर्मा। दोमति

१ २ ३ १ ३ ५ ३
भा२३यिः। परिष्कृता३४३ः॥(२) आ२३४यम्। दा२३

५ १ १र १ १ २ र १र २
४स्मा। यसाधा२३नाः। आयच्छुमङ्हा। यवीता३२या

१ २र१र २र ३ २ १ २ ३ २ १
यि। आयन्देवे। ष्योमधुमाधतरःसुता३४३ः। ओ२३

४५ई। डा(३)॥ १२ *॥ [१]

१ र १र १ र १
॥ शुद्धानम्॥ तंवःसखा। योमदाया। पुनाना]

र १ १ १ र १
मा२। भिगायता। शिष्टुन्नाहाहा२। व्यैःस्व। दा

५र र १ र २ १ ११११
२या२३४औहोवा। तगूर्त्तिभिरे३उपा२३४५(१)॥१०†॥[२

* ऊ० गा० १प्र० १ख० ११सा० ।

† ऊ० गा० ८प्र० १ख० १०सा० ।

॥ काशीतम्॥ तंवःसखा। योमदा२३या३४। पु नानमा। भिगाया२३ता३४। श्रिष्टुब्रहा। व्यैःसूदयन्त गू। ता२यि। भा२३४। औहोवा। ऊ२३४ पा(१)॥११*॥[३] १९

सोमाःपवन्तइति-ऋचात्मकं चतुर्थं सूक्तम्;

तत्र, प्रथमा।

सोमाःपवन्तइन्दवोस्मभ्यङ्गातुवित्तमाः।
मित्राःस्वानाअरेपसःस्वाध्यःस्वर्विदः॥१†॥

"गातुवित्तमाः" अतिशयेन मार्गस्य लम्भकाः "इन्दवः" दीप्ताः "सोमाः" "पवन्ते अस्मभ्यम्" अस्मदर्थं चरन्ति आगच्छन्ति वा। कीदृशाः? "मित्राः" देवानां सखिभूताः, "स्वानाः" सुवानाः अभिषूयमाणाः "अरेपसः" पाप-रहिताः, अतएव "स्वाध्यः" शोभन-ध्यानाः "स्वर्विदः" सर्वज्ञाः स्वर्ग-प्रापका वा॥१॥

---

* ऊ० गा० ८प्र० १ख० ११गा०।

† ऋ० सा० ६, २, १, ४=(१भा० १५८पृ०)—ऋ० वे० ७, ५, १, ५।

अथ द्वितीया।

१ २ १ २   २ २ ३ १ २ ३ १ २
तेपूतासोविपश्चितःसोमासोदध्याशिरः।
१ २ ३ १ २ ३ १ २   ३ १ २ ३ २ ३ १
सूरासोनादर्शतासोजिगत्नवोध्रुवाघृते॥ २ *॥

"पूताः" पवित्रेण परिपूताः, "विपश्चितः" मेधाविनः, "दध्याशिरः" दध्यामिश्रणाः, "घृते" वसतीवर्याख्ये उदके "जिगत्नवः" गमन-शीलाः "ध्रुवाः" तत्र स्थैर्येण वर्त्तमानाः "ते" "सोमासः" सोमाः "सूरासः न" सूर्य्या इव "दर्शतासः" पात्रेषु सर्वैर्दर्शनीया भवन्ति† ॥ २ ॥

अथ तृतीया।

३ २ ३ १ २ ३ १ २ ३ १ ८ २८ ३ २
सुषाणासोव्यद्रिभिश्चितानागोरधित्वचि।
१ २ ३ १ २ ३ ७ ३ १ २   ३ १ २
इषमस्मभ्यमभितःसमस्वरन्वसुविदः॥ ३ ‡॥ २०

"गोः" अनडुहः "अधित्वचि" अधिषवण-चर्म्मणि "चिताना" ज्ञायमाना "अद्रिभिः" ग्रावभिः विविधैः "सुष्वाणासः" स्तूयमानाः "वसुविदः" वसुनो लम्भकाः "एते" सोमाः अस्मभ्यम्

* ऋ० वे० ७, ५, ३, १।

† 'दर्शतासः—सर्वस्य द्रष्टारः'— इति वि०।

‡ ऋ० वे० ७, ५, ३, १।

"इषम्" अन्नम् अभितः "समस्वरन्" सम्यक् प्रध्वयन्ति प्रयच्छन्तीति यावत्* ॥ ३ ॥ २०

५र र　२ २　४ ५
॥ गौरीवितम् † ॥ सोमाः । पवा३ । तइन्दवाः ।

१ र १ १ र र २ ४
अस्मभ्यङ्गातुवित्तमा२३ः । मायिता(स्वाना३१२३ः । अ

१ र २ ४ ५
रे५पसाः । सूवाधिया३१२३ः । सुवोवा । वा५यिदोई

५ ५र र १र २ ४ ५ १र र र
ह्वायि ॥(१) तेपू । तासो३ । विपश्चिताः । सोमासो

र १ र र २ ४ र १
दध्याश्चिरा२३ः । सूरासोना३१२३ । दशा५तासाः । जा

२ ४ ५ ४ ५
यिगत्नवा ३ १ २ ३ः । ध्रुवोवा । घा५र्त्तौई ह्वायि ॥(२)

५र ३र २ ४ ५ १ र र र
सुष्वा । णासो३ । वियद्रिभायिः । चितानागोरधित्व

१ २ ४ १
चा२३यि । आयिषमस्मा३१२३ । भ्यमा५भिताः । सा

४ ४
मस्वरा३१२३न् । वसोवा । वा५यिदोई ह्वायि(३) ॥ १ २ ‡॥[१]

* 'समस्वरन्— उन्मादयन्'—इति वि० ।

† "महागौरीवितम्"—इति ख० पु० पाठः ।

‡ ऊ० गा० १प्र० २अ० ११सा० ।

२र र २
॥ मधुश्च्युन्निधनम् ॥ सोमाःपवन्तइन्दवा३ए। अस्म
र ५ १ १ २ २ ५ २ २ १
भ्यङ्गा३तुवित्तमा३ः। हा३हा। औ३हो३वा। आयिही
र र र ५ १र १ २ २ ५ १
२। मित्रास्स्वाना३अरेपसा३ः। हा३हा। औ३हो
२ १ र र २ २ २ ५
३वा। आयिही२। स्वाधिया३ः। हा३हायि। औ
२ २ १ १ ३ ५र र
३हो३वा। आयिही२। सुवः। वा२यिदा२३४औहो
२ रर र र २ र र र १ र
वा ॥(१) तेपूतासोविपश्चिता३ए। सोमासोदा३धा आ
२ १ १ ५ २ २ १ र
शिरा३ः। हा३हा। औ३हो३वा। आयिही२। सू
र र १ र १ १ १ ५ २ २ १
रासोना३दार्शतासा३ः। हा३हा। औ३हो३वा। आ
१ २ २ २ ५ २ १
यिही२। जायिगत्नवा३ः। हा३हायि। औ३हो३वा।
१ १र १ ५र र १
आयिही२। ध्रुवाः। घा२र्त्ता२३४औहोवा ॥(२) सु
र र र २ र र र ५ १ १
षाणासोवियद्रिभा३यिरे। चितानागो३राधित्वचा३।
१ १ ५ २ १ १ १
हा३हा। औ३हो३वा। आयिही२। इषमस्मा३भ्या

२ २ २ ऽ २ २ १
मभिताऽ३ः । हा ३ हा । औ३हो ३ वा । आयिही२ ।
१ २ २ २ ऽ १ १ १
सामस्वरा३न् । हा३हायि । औ३हो३वा । आयिही
१ २ ५र २ २ १ २१११
२ । वसु । वा२यिदा२३४औहोवा । मधुश्च्युता२३४
१
पुः(३) ॥ १४ * ॥ [२]

२र १ २ ५
॥ वाङ्निधनङ्कौत्सम् ॥ सोमाःपावा३१२३४ । तइ ।
३ २ २ १ १ २ ५ २ १ २ १
द्वा३ । अस्मभ्यङ्गा३१२३४ । तुवि । तमा३ः । मित्रा
२ ५ २ ३ २ २ १ २
स्वाना३१२३४ः । अरे । पसा३ः । सुवाधीया३१२३ः ।
४ २र १ १ ५ ३ २
सुवा५विंदा३उ ॥(१) तेपूतासो३१२३४ । विपः । चिता
२र १र र २ ५र ३ २ २र १
३ः । सोमासोदा३१२३४ । धिया । शिरा३ः । सूरासो
२ ५ ३र २ २ १ २
ना३१२३४ । दर्श । तासा३ः । जिगात्नावा३ १ २ ३ः ।
४ २ १ २ ५ १ २
ध्रुवा५घृता३उ ॥(२) सुषाणासो३१२३४ । विय । द्रिभा
२१र र २ ५ ३ २ २ १
३यिः । चितानागो३१२३४ः । अधि । त्वचा३यि । वृषा

* ऊ० गा० ३प्र० १ख० १४सा० ।

२ ५ २ १ १ १ २
माभा३१२३४। भ्यम। भिता३ः। समाभारा३१२३

४
न्। वसूयुविदाउ(३)॥ १५ *॥ [३]

५र र २२३ ४ ५ २ १ १ १
॥ ऐडकौत्सम्॥ सोमाःपवन्तइन्दवाः। अस्माभ्यङ्गा।

१ ३२ १ २ ३ ५ १र १र १र१२ १ १
तुवित्तमाः। मायित्राओ२३४वा। स्वानाअरेपसा २ ३

१ १ १र २ १ २ १ २ ५रर२र१र
४ ५ः। सुवाधियाः। सुवर्वा२३यिदा३४३ः॥(१)तेपूतासो

३ ४ ५ १र १ १र १ १ १र २ १ ३ २
विपश्चिताः। सोमासोदा। धियाश्रिराः। व्हराओ२३

५ १र १२ १र २ १ १ १ १ २ २ १ १ १र
४वा। सोनदर्शतासा२३४५ः। जिगत्नवाः। ध्रुवाघा

२ ५ र १र२र ३ ४ ५ २ १
२३र्त्ता२४३यि॥(२) सुषाणासोवियद्रिभायिः। चिता

१र १ २ ३ २ १ २ ३ ५ २ १
नागोः। अधित्वषायि। आयिषाओ२३४वा। अस्म

२ १ २ १ १ १ १ ३ २ १ २ १ २
भ्यमभिता२३४५ः। समस्वरान्। वसुवा२३यिदा३४३ः।

१
ओ२३४५ई। ई। डा(३)॥ १६ †॥ ४]

३र २ २ ४ ५ ५ २
॥ श्यावाश्वम्॥ सोमा३१ः। पा३व। तइ। दा३

* ऋ० गा० ३प्र० २ख० १५सा०।

† ऋ० गा० ३प्र० २ख० १६सा०।

५ १ र २ १

वः । एहिया । आ । अभ्यज्ञातू । वि । तमा२ः ।

१र र १र २ ४ ५ २र

एहिया२ । मित्रास्त्वानाआ३रे३ । पा२३४साः । ऐ

१र र १ २ ४ २

हा२यि । एहिया२ । सुवाधियाःमू३वा३ः । वा३४५यि

५ १र १ २ ४ ५ ५ २

दो६हायि ॥(१) तेपू३१ । ता ३ सो । विपः । चा ३

४ ५ १ र र ःर

यितः । एहिया । सो । मासोदधायि । आ ।

१ १र र र १र २ ४ ५

शिरा२ः । एहिया२ । सूरासोनादा३र्शा३ । ता२३४साः ।

२र १र १ २ ४ २

ऐहा२यि । एहि या२ । जिगत्नवोमू३वा३ः । घा ३

५ २ २ २ ४ ५ ५

४ ५ तोई६हायि ॥(२) सुषा३१ । णा३सो । विय ।

२ ४ ५ १ र र र २ १

द्रा३यिभिः । एहिया । चायि । तानागोरा । धि । त्वचा

१र १ २ ४

२यि । एहिया२ । वृषमस्त्वाम्या३मा३ । भा२३४यिताः ।

२र १र १ २ २

ऐहा२यि । एहिया२ । समस्वरान्वा ३ सू ३ । वा ३

५

४ ५ यिदो ६ हा यि(३) ॥ १६ * ॥ [५]

---

* ऊ० गा० ११प्र० २ख० १६सा० १

२र र २ १
॥ आन्धीगवम् ॥ सोमाःपवन्तआ१यिन्दावाः। अ
र २ १ १ र २ १र २र
स्मभ्यम्। मातूर३वा। ऊम्मा२१ऽ२। तमामित्रास्त्वा
१र २र १ ३ १ १ १ १ १ र १ १
नाअरेपसा२३४५ः। सूवा३उवा। धी२याः। स्व२३वाः।
१ १ ४ ५ १र र र र र २ १र
विदा। औ३होवा॥(१) तेपूतासोविपा१श्चायिताः। सो
र २ १ १ र र २र १
मासः। दधा२३आ। ऊम्मा२१ऽ२। श्रिरःसूरासोन
२ १र १ १ १ १ १ १ २ २ १
दर्शतासा२३४५ः। जायिगा३उवा। त्वा२वो। ध्रू२३
२ १ १ ४ ५ २ र र र
वाः। घृता। औ३होवा॥(२) सुष्वाणासोविया१द्रा
२ १ र र र २ १
यिभायिः। चितानाः। गोरा२३धा। ऊम्मा२१ऽ२।
१र २१ २ १ ३ १ १ १ १ १ २ १ १
त्वचोषमस्मभ्यमभिता२३४५ः। सामा३उवा। स्वा२रा
२ १ २ ४ ५
न्। वा२३स्व। विदा। औ३होवा। हो५ई।
डा(३) ॥ १७* ॥ [६]
२र र २ १ २
॥ निषेधम् ॥ सोमाःपवन्ता३इन्दवाः। अस्माभ्य

* ऊ० गा० १५प्र० १ख० १७गा०।

ङ्गा । तुवित्तमा२ः । इहा३ । मायिना३सखानाः । हा

हो२३४हा । अरेपा२३साः । इहा३ । सूवा३धीयाः ।

हाहो२३४हा । सुवा२र्वा५यिदा६५६ः ॥(१) तेपूतासो

वा३यिपश्चिताः । सोमासोदा । धियाशिरा२ः । इहा

३ । हरा३सोना । हाहो२३४हा । दर्शता २ ३ साः ।

इहा३ । जायिगा३त्नावाः । हाहो२३४हा । ध्रुवा३

घा५र्त्ता६५६यि ॥(२) सुष्वाणासोवा३यद्रिभायिः । चिता

नागोः । अधित्वचा२यि । इहा३ । आयिषा३मास्मा ।

हाहो२३४हा । भ्यमभा२३यिताः । इहा३ । सामा३स्व

रान् । हाहो२३४हा । वमू३वा५यिदा६४६ः । हे२३४

५(३) ॥ १८ * ॥ [७]

॥ क्रौञ्चाद्यम् ॥ सोमाःपवौचो । ताइन्दवाः । अस्म

* ऊ० आ० १५प्र० १ख० १८खा० ।

१ १ ४ १र १र र
भ्यङ्गा३ । तूवा३यिता५मा६५६ः । मित्रास्त्वानौहो ।
२र १र २र १ २ ४
आरेपसाः । सुवाधिया३ः । सूवा३यिर्वा५यिदा६५६ः ॥(१)
२र र१र र २र १ २र र र १ २
तेपूतासौहो । वीपश्चिताः । सोमासोदा३ । धात्रा३
४ २र र१र र २ १र २
आ५यिरा६५६ः । सूरासोनौहो । दर्शतासाः । जिग
१ २ ४ २ र १र र
त्नवो३ । ध्रू वा३वा५त्ता६५६यि ॥(२) सुषाणासौहो ।
२र १ २ र र १ २ ४
वीयद्रिभायिः । चितानागो३ः । आधा३यित्वा५चा६५
२ १ र २र १ २ १
यि । इषमस्मौहो । भ्यामभिताः । समस्वरा३न् । वा
२ ४
सू३वा५यिदा६५६ः(३) ॥ १ * ॥ [८]

४र २ ४ २ ४
॥ यज्ञायज्ञीयम् ॥ सोमा५ःप । वा ३ न्ता ३ इन्दा
५ १ २१ २ २ १ १र
वाः । आस्मभ्यङ्गा । तूवायित्ता३माः । मित्रा २त्वा ।
र २ १ २ २ १र
नाआ२३र । ऊम्मायि । पा३साः । सूवाधियःसुवा२
३ २ १ २ १रर र र र र
विदाउ ॥(१) दास्तायि । पूतासोविपश्चितःसोमासोदा ।

---

* ऊ० गा० १६प्र० १अ० १खा० ।

२ १ २ र १र १ २ १
धा३आआ३यिरा:। सूरा२स:। नदा२३र्षा। ऊम्मा

२ २ १ र ३२ १
यि। ता३सा:। जायिगत्नवोधवार२घृताउ॥(२) तायि

२ १र र र र र २ १ २ २
सू। षाणासोव्यद्रिभिस्थितानागो:। आ३धायित्वा३चा

१ १ २ १ २ २
यि। इषा२म। सभ्या२३मा। ऊम्मायि। भा३यिता:।

१ ३ २ १११
सामस्वरन्वसू२विदाउ। वा३४५(३)॥ १४ *॥ [९] २०

अथायापवेति-त्र्यृचात्मकं पञ्चमं सूक्तम्,

तत्र, प्रथमा।

३ २ ३ १ २ १र २र
अयापवापवस्वैनावसूनि

३ १ २ ३ १ २ ३ १ २
मा१ंश्चत्वइन्दोसरसिप्रधन्व।

३२ ३ २ ३ २ ३ २ ३ १
ब्रध्नश्चिद्यस्यवातोनजूतिं

२ ३ १ २ ३ १ २ ३ १ २
पुरुमेधाश्चित्तकवेनरन्धात्॥ १ †॥

हे सोम! "अया" अनया "पवा" पवमानया "धारया" "एना" एनानि "वसूनि" धनानि "पवस्व" क्षर [पवा—

---

* ऊ० गा० २२प्र० १ख० १४सा०।

† ऋ० सा० ६, १, ५, ९ (२भा० १४२ पृ०)=ऋ० वे० ७, ४, २१, १।

पूञ् पवने ( क्र्या० प० ) "अन्येभ्योऽपि दृश्यन्ते ( ३,२,१७८ )" —इति विच् प्रत्ययः, आर्द्धधातुक-लक्षणो गुणः, "सावेकाच ( ६, १, १६८ )"—इति तृतीयाया उदात्तत्वम् ]। तथा हे "इन्दो !" त्वं "मांहत्वे" मन्यमानानां चातके "सरसि" उदके वसतीवर्याख्ये "प्रधन्व" प्रगच्छ। "यस्य" सोमस्य शोधने सति "ब्रध्नश्चित्" सर्वेषां प्रज्ञापको मूलभूतो वा आदित्योऽपि "वातः न" वायुरिव "जूतिं" वेगं प्राप्तः सन् किञ्च "पुरुमेध-श्चित्" बहुविध-यज्ञ इन्द्रोऽपि "तकवे" [ तकतिर्गति-कर्मसु पठितः ( निघ० २, १४, ६९ ), अस्मादौणादिक उन् प्रत्ययः ] सोमं गच्छत ; मह्यं "नरं" कर्मनेतारं पुत्रं "धात्" ददातु प्रयच्छतु। स त्वं प्रधन्वेति पूर्वेण सम्बन्धः॥

"यस्य"-"अत"—इति पाठौ, "जूतिं"-"जूतः"—इति, "धात्"-"दात्"—इति च॥ १॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २ ३
उतनएनापवयापव

१ २ ३ २ ३ १ २ ३ २
स्वाधिश्रुतेश्रवाय्यस्यतीर्थे।

३ २ ३ १ २ ३ १र २र
षष्टिꣳसहस्रानैगुतोवसूनि

३ २उ ३ १ २ ३ १ २
वृक्षन्नपक्वन्धूनवद्रणाय॥ २ *॥

* ऋ० वे० ७, ४, २१, ३।

हे सोम ! "उत" अपिच "अवाव्यस्य" सर्वैः अवनीयस्य तव "श्रुते" प्रसिद्धे [ यद्वा, षष्ठार्थे चतुर्थी श्रुत-शब्दस्य ] "तीर्थे" स्थाने "नः" अस्माकं सम्भृते यज्ञे "एना" अनया "पवया" पूयमानया "धारया" अधिकं "पवस्व" चर । "नैगुतः" नीचीनं गन्तवे* [ न-शब्दायन्त इति निगुतः शत्रवः, तेषां हन्तृत्वेन सम्बन्धी ] सोऽयं सोमः "षष्टिं" षष्टि-सङ्ख्याकानि "सहस्रा" सहस्राणि "वसूनि" धनानि "रणाय" शत्रूणां जयार्थं धनवत् अस्मानकम्पयत् प्रायच्छदिति यावत् । कथमिव ? "वृक्षं न पक्वं" पक्व-फलं वृक्षं यथा कम्पयति फलार्थी, तद्वत् ॥२॥

अथ तृतीया ।

२ ३ १ २ ३ २ ३ १ २ ३ १र
महीमे अस्यवृषनामशूषे

२र ३ १२ ३ १ २
माᳫँश्चत्वेवापृशनेवावधने ।

१ २ ३ १२ ३ २३१ २ ३
अस्वापयन्निगुतःस्नेहयच्चापा

२ ३ २३ १ २ ३ २
मित्राᳫँअपाचितोअचेतः ॥ ३ † ॥ २१

"मही" महते प्रभूते "वृषनाम" [सुपां सुलुगिति ( ७, १. ३९) सुपो लुक्] वृषनामनी वर्षण-नमने, शराणां वर्षणं, शत्रूणां नम-

* 'नैगुतः—निगुतानां नितरां गोपितानाम्'—इति वि० ।

† ऋ० वे० ७, ४, २१, ४ ।

नम्, "इमे" एते द्वे कर्मणी "अस्य" सोमस्य "शूषे" सुखकरे* भवतः ; द्वे च कर्मणी "मांश्चत्वे" [अश्वनामैतत्(निघ० १,१४,१८)] अश्वैः क्रियमाणे युद्धे† तत्साध्यत्वाद् युद्धमिह गृह्यते ] "वा" अपिवा "पृशने" स्पर्शन-साध्ये बाहु-युद्धे "वधत्रे" शत्रूणां हिंसन-शीले भवतः । सोऽयं "निगुतः" नीचैः शब्दायमानान् शत्रून् "अस्वापयत्" असूषुपत् अवधीदित्यर्थः । किञ्च "स्नेहयत्" प्राद्रवयत् सङ्ग्रामाच्छत्रून् । अथ प्रत्यक्षः । हे सोम ! स त्वम् "अमित्रान्" शत्रून् "अपाचेत" अपगमय । तथाच "अपाचितः" अग्नि-चयन मकुर्वतः नास्तिकांश्च‡ "इतः" अस्मत्सकाशात् अपाचेत अपगमय [अचतिर्गतिकर्मा(व्या० प०)] ॥ ३ ॥ २१

२र १ २ १ २ १ र
॥ औष्ट्राद्यम् ॥ औहोवाऽयि । अयोवाऽयि । पवा

र र २१ २ ५ २ ० र ५ १ ०
स्वैनावश्च२३नी । औ३होऽयि । इहा । ई३या । मा

१ र २१ २ ५ २ ३ १ ०
श्चत्वइन्द्रोसरसिप्रधार२३न्वा । औ३होऽयि । इहा । ई३

२ र १ र २१ २ ५ २
या । मा०श्चत्वइन्द्रोसरसिप्रधार२३न्वा । औ ३ होऽयि ।

* 'शूषे—स्तापयामः अथवा शूषे शोषणाय'—इति वि० ।

† 'मांश्चत्वे—मंहनीयत्वाय'—इति वि० ।

‡ 'अपाचितः—पतिता चेतना भवन्ति' -इति वि० ।

२१ ५ २ १ २ २ २१ २ ५
इहा । ई३या । अग्निश्चिद्यस्यवातोनजूर२३तीम् । औ३

२ ३२ ५ २ १ २ २ २२१ २
होयि । इहा । ई३या । पुरुमेधाश्चित्तकवेनरार२३धा

५ २ ३२ १ ३ ५२ २
त् । औ३होयि । इहा । ई२ । या२३४ । औहोवा ॥(१)

१२ १ २ १ २ १२२ २ २१ १ ५
औहोहायि । उतोहायि । नएनापवयापवार२३स्वा । औ

२ ३२ ५ २ १ २ २ २ १
३होयि । इहा । ई३या । अधिश्रुतेअवायियस्यतार५

२ ५ २ ३२ ५ २ २
यिथायि । औ३होयि । इहा । ई३या । षष्ठिꣳसह

२ २ २ २१ २ ५ २ ३२ ३ २
स्रानैगुतोवस्व२३नी । औ३होयि । इहा । ई३या । वृ

१ २ २१ २ ५ १२ ३२ १
त्रन्नपक्वन्धूनवद्रणा२३या । औ३होयि । इहा । ई२ ।

३ ५२ २ २२ १ २ १ २ २
या२३४औहोवा ॥(२) औहोहायि । मह्योहायि । मे

२ ५ २ ३२ ५ २
अस्यवृषनामघ्ण२३षायि । औ३हायि । इहा । ई३या ३

१२ २ २ २२२१ २ ५ २ ३२
माꣳस्त्विवापृशनेवावधार२३त्नायि । औ३हायि । इहा ।

५ २ १२ २ २१ १ ५ २
ई३या । अस्तापयन्निगुतस्वेह्या२३त्वा । औ३होयि ।

२ २ ५ २ १ र र र र २ १ २
इहा । इ३या । अपामिवा७ँ अपाचितोअचा२३यिताः ।
५ २ २ २ १ ३ ५ र र
औ३होयि । इहा । इ२ । या२३४ । औहोवा ।
१ २र ३ १
ए३ । दौदिहौ१(३) ॥ १७ * ॥ [१]

१र २र ३र १ १ २ २
॥ इहवद्वासिष्ठम् ॥ औहोवाहा३ होयि । इहा ।
१र २ १ र २ ३ ४ ५ २र १ २
अयापवा । पवस्वै । नावसूना । मा७ँ स्वत्वआयि । दो
१ १ २ ४ ५ २ १ २ १ र २ ३ ४
३स्वर । सिप्रधन्वा । अध्रस्विद्या । स्या३वा । तोनजू
५ २ १र २ १ २ २ ४
तोम् । पुरुमेधाः । चित्कक । वा३४३यि । ना३रा५
२ १ २ १ २ ३ ४ ५ २
न्वा६५६त् ॥(१) उतनए । ना३पव । यापवस्वा । अ
१ २ १र २ ३ ४ ५ २ १
धिश्रुतायि । श्रवायि । यस्यतायिर्थायि । षष्ठि७ँ सहा ।
२ १ र २ ३ ४ ५ २ २ १र २
स्वा३नैगु । तोवेसूनी । वृत्तन्नपा । क्वधून । वा३४३त् ।
२ ४ २ १रर २ १ २ ३
रा३णा५या६५६ ॥ (२) महीमेश्रा । स्या३वृष । नाम
४ ५ २र १ र १ १ र २ ३ ४ ५ २
अूषायि । मा७ँ स्वत्वेवा । पुष्पने । वावधत्वायि । अ

* ऊ० ग्रा० ३प्र० २ख० १७सा० ।

१र २ १ २ ३ ४ ५ १र २र ३र १ १
स्वापयात्। निगुतः। स्ने हयस्ना। औहोवाहाइहोयि।
२ २ १र २ १र २ २ ४
इहा। अपामित्राऽ। अप्राचि। तो३४३। आ३चा
५यिताई५६ः(३) ॥ १० * ॥ [२]

२ र १ १ २र र १
॥ वार्त्रतुरम् ॥ अयापवोवा पावस्वैना। वसूर३
२ १र र २ १ २ १ २ १
नी। माऽस्त्वइन्दोमररसि। प्रधा२३न्वा। ब्रधस्विद्य
२ १ २ ३ ३ १ २ १
स्य। वा। तोनाजू२३४तोम्। पुरु। मायि। धास्वि
१ ४ २ ५ २
त्ताका२३। वा२३यिना३। रा३४५धोईहायि ॥(१) उत
१ २ १ २ र १ २ १ र र
नओवा। नापवया। पवा२३स्वा। अधिश्रुतेश्रवायि
२ १ २ १ २ १ २र १र २
य। स्यना२३यियोयि। षष्टिऽसहस्रानै। गू। नोवा
३ ५ १ २ १ १ ४
सू२३४नी। सूनाम्। ना। पाकन्धूना२३। वा२३द्रा
२ ५ २र १ २ १ २र
३। णा३४५योईहायि ॥(२) महीमओवा। स्यात्रुषना।
१ २ १र र र र र १ २
मप्रू२३षायि। माऽस्त्वेवापृश्नेवा। वधा२३त्रायि।

* ऊ० गा० ८प्र० २अ० १०गा०।

१ र २ १ २ १ २ ३ ५ १
अस्वापयन्निगुतः। स्ने। हायार२३४त्रा। अपा। मा

२ १ १ ४ २
यि। त्रा०उअपाचार२३यि। तो२३आ२। चा२३४५यितो

५
६हायि(३)॥ १*॥ [३] २१

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य

षष्ठः खण्डः॥ ६॥

---

अथ सप्तम-खण्डे—

प्रथमतृचे†, प्रथमा।

१ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३क २र
अग्ने त्वन्नो अन्तम उत त्राता शिवो भुवो वरूथ्यः॥ १ ॥ ‡

हे "अग्ने!" "वरूथ्यः" वरणीयः सम्भजनीयः। यद्वा, वरूथैः परिधिभिर्वृतः त्वं "नः" अस्माकम् "अन्तमः" अन्तिकतमः "भुवः" भव। "उत" अपिच "त्राता" रक्षकः "शिवः" सुखकरश्च भव॥

"भुवः"-"भव"—इति पाठौ॥ १॥

---

* ऊ० गा० १३प्र० २ख० १सा०।

† 'यज्ञायज्ञियमग्निष्टोमसाम'—इति वि०।

‡ छ० आ० ५, २, २, २ (२भा० ८९८ पृ०)=ऋ० वे० ४, १, १६, १।

अथ द्वितीया।

१ २ ३ १ र २ र ३ १ २ ३ १ २ ३ १ २
वसुरग्निर्वसुश्रवा अच्छानक्षिद्युमत्तमोरयिन्दाः ॥ २* ॥

"वसुः" वासकः "अग्निः" सर्वेषामग्रणीः "वसुश्रवाः" व्याप्तान्नस्त्वं† "अच्छ" आभिमुख्येन "नक्षि" अस्मान् व्याप्नुहि। "द्युमत्तमः" अतिशयेन दीप्तिमान् त्वं "रयिं" पश्वादि-लक्षणं धनं "दाः" अस्मभ्यं देहि ‡॥

"द्युमत्तमः"-"द्युमत्तमम्"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ १ २
तन्त्वा शोचिष्ठदीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥३¶॥ २२

हे "शोचिष्ठ" अतिशयेन शोचिष्मन्! "दीदिव" स्वतेजोभि-र्दीप्ताग्ने! "तं" "त्वा" त्वां "सुम्नाय" सुखाय [ सुम्नमिति सुखनामैतत् ( निघ० ३, ६, १७) ] तदर्थं "सखिभ्यः" समान-ख्यातिभ्यः पुत्रेभ्य § सुखार्थञ्च "नूनम्" "ईमहे" याचामहे ॥ ३ ॥ २२

* ऋ० वे० ४, १, १६, २।

† 'वसुश्रवाः—अन्नेन धनेन च सम्पन्नः'—इति वि०।

‡ 'रयिन्दाः—रयिं धनं ददातीति रयिन्दाः'—इति वि०।

¶ ऋ० वे० ४, १, १६, ४।

§ 'सखिभ्यः-ऋत्विग्भ्यः'—इति वि०।

॥ गूहम् ॥ ओग्नायि । त्वन्नोर२ग्रा । ऊम्मा २ ३ । ता२३४मा: । उतत्रातामिवोभुवा२३४५ः । शिवोभुवा२ ३ः । वरोवा । था५योहायि ॥(१) वाह्नः । अ । ग्ना यिर्वा२३सू । ऊम्मा२३ । आ२३४वाः । अच्छानक्षिद्युम त्तमा२३४५ः । द्युमत्तमा२३ः । रयोवा । आ५यिन्दो ६हायि ॥(२) तान्त्वा । शो । चायिष्ठा२३री । ऊम्मा २३यि । दी२३४वाः । सुम्नायनूनमीमहा२३४५यि । न मीमहा२३यि । सखोवा । भा५योहायि(३) ॥१८*॥[१]

सत्रासाहीयम् ॥ अग्ना३४यि । त्वन्नोअन्तमः । ओ ईवा । उतत्रा२ता । शा२यिवो । भुर३वाः । वरौ ३हो । वाहा३४३यि । था२३४योहायि ॥(१) वह्न३४ः । अग्निर्वसुश्रवाः । ओईवा । अच्छाना२त्ताथि । द्यू२मा ।

* ऊ० गा० १प्र० २ख० १८गा० ।

२ १ ५ २र २र २ १ ५
ता२३मा: । स्यौ३हो । वाहा३४३यि । आ२३४यिन्दो
५ ३ २ र र ५ र
इ्हायि ॥(२) तन्वा३४ । शोचिष्टदीदिवः । ओइ्वा ।
२ १र १ १ २ १ ५ १र
सुम्नाया२नू । ना२माथि । मा२३हायि । सखौ३हो ।
२र १
वाहा३४३यिइ्हायि(३) ॥ १५ * ॥ [२] २२

अथ द्वितीय-तृचे†—

प्रथमा ।

३ १उ ३ १ २ ३ १ २ ३ १ २ ३ २
इमानुकम्भुवनासीषधेमेन्द्रश्चविश्वेचदेवाः ॥ १‡ ॥

"इमा" इमानि परिदृश्यमानानि भुवनानि "नु" क्षिप्रं "सीषधेम" साधयेम वशीकरवाम । "कम्"—इति पूरकः [यद्वा, इमानि सर्वाणि भूतजातानि अस्मभ्यं कं सुखं सीषधेम साधयन्तु ; पुरुषव्यत्ययः (३,१,८५) ] । "इन्द्रश्च" "विश्वे" सर्वे अन्ये "देवाः च" स्तुत्या प्रीत्या "इमम्" अर्थम् साधयन्तु ॥

"सीषधेम"-"सीषधाम"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० १२प्र० १ख० १५सा० ।

† 'गौतमस्य भद्रम्'—इति वि० १ सामैतदूहगानस्य ।

‡ छ० आ० ५, १, २, ६ (१भा० ९०२पृ०)=ऋ० वे० ८, ८, १५, १ ।

अथ द्वितीया ।

२ १ २ ३क २र ३ १ २ ३ १र २र ३ १ २
यज्ञञ्चनस्तन्वञ्चप्रजाञ्चादित्यैरिन्द्रःसहसीषधातु ॥२*॥

"नः" अस्माकं "यज्ञ" ज्योतिष्टोमादिकञ्च यागं "तन्व" शरीरञ्च "प्रजां" पुत्रादिकाञ्च "आदित्यैः" अदिति-पुत्रैः अन्यै-र्देवैः सह वर्त्तमानः "इन्द्रः" "सीषधातु" साधयतु ॥

"सहसीषधातु"-"सहचीक्लृपानि"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

३ २उ ३ १ २ ३ १ २ ३ १ २ ३ १ २
आदित्यैरिन्द्रःसगणोमरुद्भिरस्मभ्यम्भेषजाकरत् ॥३†॥२३

"आदित्यैः" अदिति-पुत्रैः मित्रादिभिः "मरुद्भिः" च "सगणः" गण-सहितः "इन्द्रः" "अस्माकम्" अस्मभ्यम् "भेष-जानि" औषधानि "करत्" करोतु ॥

"भेषजाकरत्"-"भूत्वविताततनूनाम्"—इति पाठौ ॥३॥२३

---

* ऋ० वे० ८, ८, १५, २ ।

† ऋ० वे० ८, ८, १५, ३ ।

अथैकर्गात्मकं सूक्तं प्रवोर्चोपेति, चतुरक्षरात्मिका*
काचिदियमृगूपा ; यथा बह्वृचानां
"भद्रन्नोअपिवातयमनः"—इत्येक
एव पाद ऋगात्मकश्च
तद्वत् † ॥

१ २र
प्रवोर्चोप ॥ १ ॥ २४

हे ऋत्विग्यजमानाः! "वः" यूयम् "उप" समीपे "प्रार्च"
प्रकर्षेणेन्द्रं पूजयत ॥ १ ॥ २४

२१ र ७
॥ उद्वंशपुत्रम् ॥ प्रवः। आयिन्द्रायवृत्रहान्तमा

२ १ र र २ २ १ १ १
२३या। वायिप्रायगाथङ्गा१या३ता। याञ्जुजौवा३।

२ १ २ १
उप्। षा२रतो२३५पुहायि ॥(१) अर्चा। ताअर्क्कम्मरु

---

* वस्तुतस्तु "प्रवोर्चोप"—इति नैषा चतुरक्षरात्मिका ऋक् प्रत्युत छन्दआर्चिक-श्रुतायाः "प्रवइन्द्रायवृत्रहन्तमाय (५, २, १० । १भा० ८९५पृ०)"—इत्यस्याः प्रतीकं "प्रवः"—इति, किञ्च "अर्चन्त्यर्कम्मरुतःस्वर्का (५,०,१,९ । १भा० ८९४पृ०)"—इत्यस्याः प्रतीकम् "अर्च"—इति, तथैव "उपप्रक्षेमधुमतिक्षियन्तः (५, २, १, ८ । १भा० ८९३पृ०)"—इत्यस्याः प्रतीकम् "उप"—इति, एवमेव सम्पन्नं "प्रवोर्चोप" —इति, ऊहगान-तृतीयप्रपाठकान्तिममुद्रंशपुत्रनाम (१००पृ०) सामैवात्र वर्त्तमान मन्यथा तस्य मूलीभूत-ऋचस्यालाभ एव सर्वथा स्यात्। अन्यत्राप्यदर्शनात्।

† 'उद्वंशपुत्रोऽक्षरावाकसाम। "प्रवइन्द्राय"—"अर्चन्त्यर्कम्"—"उपप्रक्षे"—एषस्तृचश्छन्दसिका-भाष्ये उक्तार्थः'—इति वि०।

७ २ १ ८ २ १ १ १ ऽ
ता:सुवार२३र्क्का:। आस्तोभतिश्रुतो१यू३वा। सआ३उ
२ २ १ २ १
वा३। उप्। आ।ऽ२यिन्द्रो३पुद्दायि ॥(२) उपा। प्रा
२ ७ २ १ ८ २२ १
त्वेमधुमतायिक्षिया २ ३न्ताः। पूष्येमरयिन्धा१इम्मा३द्दा
१ ऽ २ २ १
यि। तआ ३ उवा ३। उप्। आ।ऽ २ यिन्द्रो ३ पु
२
द्दायि(३) ॥ १९ * ॥ [१] २४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य

सप्तमः खण्डः † ॥ ७ ॥

वेदार्थस्य प्रकाशेन तमो हार्द्दं निवारयन्।

पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ७ ॥

॥ इति चतुर्थस्यार्द्धः प्रपाठकः ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-

बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण

विरचिते माधवीये सामवेदार्थ-प्रकाशे

उत्तराग्रन्थे सप्तमोऽध्यायः ‡ ॥ ७ ॥

---

* ऊ० गा० ३प्र० २अ० १९सा०।

† 'षष्ठमद्दः समाप्तः। इष्ट्यग्नकद्दः समाप्तः'—इति वि०।

‡ 'इति चतुर्थप्रपाठकस्य प्रथमार्द्धः'—इति वि० पदकारादिमतग्रन्थसम्मतश्च।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ८ ॥

## ॥ अथाष्टमाध्यायआरभ्यते* ॥

तत्र,

प्रकाव्यमिति प्रथमे खण्डे—

द्वादशर्चं† प्रथमे सूक्ते—

प्रथमा ।

१ २र ३ १ २ ३ २
प्रकाव्यमुशनेवब्रुवानो

३ २ ३ २ ३ १ २
देवोदेवानाञ्जनिमाविवक्ति ।

१ २ ३ १ २ ३ २
महिव्रतःशुचिबन्धुःपावकः

३ १ २ ३ २ ३र २र ३ १ २
पदावराहोअभ्येतिरेभन् ॥ १ ‡ ॥

"उशनेव" एतन्नामक ऋषिरिव "काव्यं" कवि-कर्म स्तोत्रं "ब्रुवाणः" उच्चारयन् "देवः" स्तोता "देवानाम्" इन्द्रादीनां "जनिमा" जन्मानि "प्र विवक्ति" प्रकर्षेण ब्रवीति [ वच परि-

---

* 'इदानीं छन्दोमा वक्तव्याः । ते च त्रयः व्यूढच्छन्दस्कानुष्टुभः प्रतिपदो भवन्ति त्रिष्टुभां लोकजगत्यः जगतीनां गायत्रयः । ब्राह्मणेन ऋषय उक्ताः'—इति वि० ।

† 'प्रकाव्यमुशनेव ब्रुवाण इति द्वादशर्चो भवति । चतुर्विंशस्तोमिकश्छन्दसः'—इति वि० । द्वादशार्चः खण्डइति यावत् ।

‡ ऋ० था० ६, १, ४, २ ( १ आ० १०९४० )=ऋ० वे० ७, ४, १२, २ ।

भाषणे (अदा० प०) व्यत्ययेन विकरणस्य श्लुः (२, १, ३९), "बहुलञ्छन्दसि (७, ४, ७८)"—इत्यभ्यासस्येत्वम्], "महि-व्रतः" प्रभूतकर्म्मा, "शुचिबन्धुः" [बध्नन्ति शत्रूनिति बन्धूनि तेजांसि बलानि वा] दीप्ततेजस्कः, "पावकः" पापानां शोधकः, "वराहः" वरञ्च तदहश्च वराहः ["राजाहः सखिभ्यष्टच् (५, ४, ९१)"—इति टच् समासान्तः; तस्मिन्नहनि अभिषूय-माणत्वेन तद्वान्; अर्श आदित्वान्मत्वर्थीयोऽच् (५, २, १२७)] तादृशः सोमः "रेभन्" रेभनं शब्दं कुर्वन्, "पदा" पदानि पाषाणि "अभ्येति" अभिगच्छति; यद्वा, यथा कश्चन वराहः पदा पादेन भूमिं विक्रममाणः शब्दं करोति तद्वत्॥ १॥

अथ द्वितीया।

२ ३ २ ३ १ २ ३ १२३ २
प्रच्छ सासस्तृपला*वग्नुमच्छा†

१२३ २ १ १
मादस्तंवृषगणाअयासुः।

३ २ ३ १ २ २ १ २
अङ्गोषिण‡म्पवमानं सखायो

२ १ २ ३ १ २ १२ १२ १ २
दुर्मर्षंवाणम्प्रवदन्तिसाकम्¶॥ २ §॥

* "तृपलं"—इति
† "मन्युम्"—इति
‡ "आङ्गूष"—इति
¶ "साकं प्रवदन्ति वाणम्"—इति च
} ऋ०-पाठाः।

§ ऋ० वे० ७, ४, ११, २।

"हंसासः" शत्रुभिर्हन्यमाना हंसाइव श्राचरन्तो वा* "वृषगणाः" एतन्नामका ऋषयः† "अमात्" शत्रूणां बलात् त्रासिताः सन्तः "तृपला" तृपलं [ सुपां सुलुगिति सोराकारादेशः (७, १, ३९)। तृपल-शब्दः क्षिप्र-वाची, तदुक्तं यास्केन —"तृप्रप्रहारी क्षिप्रप्रहारी ( निरु० नै० ५, १२ )"—इति ] क्षिप्रं प्रहारिणं‡ "वग्नुम्" अभिषव-शब्दम्¶ "अच्छ" अभिलक्ष्य§ "अस्तं" यज्ञगृहं "प्रायासुः" प्रायासिषुः प्रगच्छन्ति। ततः "सखायः" स्तुत्य-स्तोतृत्व-लक्षणेन सम्बन्धेन सखिभूताः स्तोतारः "अङ्गोषिणं" सर्वैरभिगन्तव्यं‖ [ यद्वा, अङ्गोषिणं स्तोत्रार्हं ], "दुर्मर्षं" शत्रुभिः दुर्धरं दुःसहम्; एवंविधं "पवमानं" सोमम् उद्दिश्य "वाणं" वाद्यविशेषं** "साकं" सहैव "प्र वदन्ति" प्रवादयन्ति तदुपलक्षितं गानं कुर्वन्तीत्यर्थः ॥ २ ॥

---

* 'हंसासः—आदित्य-रश्मयः'—इति वि०।

† 'वृषगणाः—सेन्द्रारः सङ्घाताः'—इति वि०।

‡ तृपला—लोक-दयस्य पालकाः'—इति वि०। "सोमो वेन्द्री वा"—इति निरु० नै० ५, १२।

¶ 'वग्नु—बलम्'—इति वि०।

§ 'अच्छ—आप्तुम्'—इति वि०।

‖ 'अङ्गोषिणम्—उष दाने दीप्तौ च * * * दीप्तं सोमं'—इति वि०।

** 'वाणं—वादित्र-विशेषम्, यथा वाणस्य शततन्त्रीकस्य जायते शब्दः तद्वत् सोमस्य जायमानस्य महान् शब्दः'—इति वि०।

अथ तृतीया।

१ २　　　३ १ २ ३ २उ
सयोजत*उरुगायस्यजूतिं
१ १ २　　३ १र १र
वृथाक्रीडन्तम्मिमतेनगावः।
१ १ २　३ १ २ ३
परीणसङ्कृणुतेतिग्मशृङ्गो
२ ३ २ ३ १ १ २ ३ १ २ ३ १ २
दिवाहरिर्द्दृशेनक्तमृज्रः॥ ३ †॥

"सः" सोमः "उरुगायस्य" बहुभिः स्तुत्यस्य आत्मनः‡ "जूतिं" गतिं¶ "योजते" युनक्ति अन्तरिक्षे प्रेरयति। "वृथा क्रीडन्तम्" अनायासेन विहरन्तं गच्छन्तं सोमं "गावः" अन्यो गन्तारः "न मिमते" न परिच्छिन्दन्ति मातुं न शक्नुवन्तीत्यर्थः। किञ्च "तिग्मशृङ्गः" [ शृणवन्ति हिंसन्ति तमांसीति शृङ्गाणि तेजांसि ] तीक्ष्ण-तेजस्कः "परीणसं" [ बहुनामैतत् (निघ० ३, १, ७) बहुविधं तेजः§ "कृणुते" करोतु अन्तरिक्षे वर्त्तमानो यः सोमः "दिवा" अहनि "हरिः" हरितवर्णः "दृशे" दृश्यते

* "सरंहत"—इति ऋ० पाठः।

† ऋ० वे० ७, ४, १२, ३।

‡ 'उरुगायस्य—बहुविधस्य गानस्य'—इति वि०।

¶ 'जूतिं—प्रतिशब्दम्'—इति वि०।

§ 'परीणसं—परि समन्तात् गावो नीयन्ते परीणसः, तम्'—इति वि०।

न प्रकाशत इत्यर्थः, "नक्तं" रात्रौ तु "ऋज्रः" ऋजुगामी* विसृष्टः प्रकाशयुक्तो दृश्यते† ॥ [ददृशे—दृशेः कर्मणि लिटि रूपम् ॥ ३ ॥

अथ चतुर्थी।

२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्रस्वानासोरथाइवार्वन्तोनश्रवस्यवः।
१ २ ३ १ २
सोमासोरायेअक्रमुः ॥ ४‡ ॥

"स्वानासः" अभिषव-वेलाया मुपरवेषु¶ शब्दं कुर्वन्तः "सोमासः" सोमाः "रथा इव" यथा शब्दं कुर्वन्तो रथाः तथा, "अर्वन्तो न" यथा शब्दं कुर्वन्तो अश्वाः तथा, "श्रवस्यवः" शत्रुभ्यः सकाशादन्नमिच्छन्तो "राये" यजमानानां धनाय "प्राक्रमुः" प्रगच्छन्ति ॥ ४ ॥

अथ पञ्चमी।

३ २ ३ १ २ ३ १र २र
हिन्वानासोरथाइवदधन्विरेगभस्त्योः।
१ २ ३ १ २
भरासःकारिणामिव ॥ ५ § ॥

* 'ऋज्रः—ऋ गतौ नक्तञ्चो भवति'—इति वि०।

† 'एतदुक्तं भवति—दिवाभिषिक्तः सोमो रात्रिपर्यायेषु पुनर्निषिच्यते, योऽभिषवं करोति तस्यायं दोषः सम्पद्यते'—इति वि०।

‡ ऋ० वे० ९, १०, १।

¶ यूपस्य गर्त्ता उपरवा उच्यन्ते। तद्विधायकञ्चैतत् कात्यायन-सूत्रम्—"दक्षिणस्यानसोऽधः प्रउगं खनत्युपरवानश्वादि करोत्यवटवदिति ( ८, ४, २५ )"। यथा यूपस्यावटः क्रियते तथाप्युपरवानमिकांश्चतुरो गर्त्तानभिस्तीकार मारभ्य परिलेखन पूर्वकं कुर्यादिति च तदर्थः।

§ ऋ० वे० ९, १०, २।

"रथाइव" युद्धदेशं प्रति यथा रथाः तथा* "हिन्वानासः" यागदेशं प्रति गच्छन्तः† सोमाः ऋत्विजां "गभस्त्योः" बाह्वोः "दधन्विरे" धीयन्ते। तत्र दृष्टान्तः—"भरासः" भराः "कारिणामिव"‡ यथा भारवाहानां बाह्वोर्धीयन्ते तद्वत् ॥ ५ ॥

अथ षष्ठी।

१ २ ३ १र २र १ १ २ ३ १ २
राजानोनप्रशस्तिभिःसोमासोगोभिरञ्जते।

३ १उ ३ २ ३ १ २
यज्ञोनसप्तधातृभिः ॥ ६ ¶ ॥

"सोमासः" सोमाः "प्रशस्तिभिः" प्रशस्ताभिः स्तुतिरूपाभिः वाग्भिः "राजानो न" यथा राजानः§ "सप्तधातृभिः"‖ सप्त-होताभिः "यज्ञो न" यथा च यज्ञः तथा "गोभिः" गोर्विकारैः पयोभिः "अञ्जते" अज्यते संस्क्रियत इति ॥ ६ ॥

---

* 'रथाइव—गमन-स्वभावाः'—इति वि०।

† 'हिन्वानासः—पूयमानाः'—इति वि०।

‡ 'कारिणाम् इव—कारिणः रथ-वाहकाः अथवा भराः सङ्ग्रामाः सङ्ग्राम-कारिणः—इति वि०।

¶ ऋ० वे० ९, ७, ३४।

§ 'राजानो न—न शब्द उपमार्थीयः राजान इव, राजानो यथा प्रशस्तिभिः अञ्जन्ते सेव्यन्ते तद्वत् सोमासः गोभिरज्यते; उदकैः क्षीरैर्वा'—इति वि०।

‖ 'सप्तधातृभिः—सप्त वषट्कारिणो सप्त धातारः अथवा सप्त छन्दांसि सप्त धातारः'—इति वि०।

अथ सप्तमी।

१ १ २ २ ३ १ १ २ ३ १ २ ३ १ १ ३ १
परिस्वानासइन्दवोमदायवर्हणागिरा।
१ २ ३ १ १
मधोअर्षन्तिधारया॥ ७ *॥

"स्वानासः" सुवानाः अभिषूयमाणाः "इन्दवः" सोमाः "बर्हणा" महत्या "गिरा" स्तुति-रूपया वाचा युक्ताः सन्तः "मदाय" मदार्थं "मधोः" मधुर-रसस्य "धारया" "परि अर्षन्ति" परितो गच्छन्ति॥

"परिस्वानासः"-"परिसुवानासः"—इति पाठौ, "मधोः" -"सुताः"—इति च॥ ७॥

अथ अष्टमी।

२ १ २ ३ १ २ ३ १ २ ३ १ ३ १ २
आपानासोविवस्वतोजिन्वन्तउषसोभगम्।
२ ३ २ ३ १ १
सूराअण्वं वितन्वते॥ ८ †॥

"विवस्वतः" दीप्तिमतः इन्द्रस्य "आपानासः" आपानभूताः "उषसः" "भगं" शोभां "जिन्वन्तः" प्रेरयन्तः "सूराः" सरन्तः‡

* ऋ० वे० ९, ७, ३४।

† ऋ० वे० ९, ७, ३८।

‡ 'सूराः—सूर्या इव दीप्तिमन्तः'—इति वि०।

सोमाः "स्वनं वि तन्वते"* अभिषव-वेलाया मुपरवेषु शब्दं कुर्वन्ति ॥

"जिन्वन्तः"-"जनम्"—इति पाठौ ॥ ८ ॥

अथ नवमी।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अपद्वारामतीनाम्प्रत्नाऋण्वन्तिकारवः।

१ २ ३ १ २ ३ १ २
वृष्णोहरसआयवः ॥ ९ † ॥

"मतीनां कारवः" स्तुतीनां कर्त्तारः "प्रत्नाः" पुराणाः "वृष्णः" सेचकस्य सोमस्य "हरसः"‡ आहर्त्तारः "आयवः" मनुष्याः ऋत्विजः "द्वारा" यज्ञस्य द्वाराणि "अप ऋण्वन्ति" विवृण्वन्ति ॥ ९ ॥

अथ दशमी।

२ १ २ ३ १ २ ३ १ २
समीचीनासआशतहोतारःसप्तजानयः।

२ १२ २२ ३ १ २
पदमेकस्यपिप्रतः ॥ १० ¶ ॥

---

* 'स्वनं वितन्वते—सूक्ष्मं वितानं कुर्वन्ति'—इति वि०।

† ऋ० वे० ९, ७, ३५।

‡ "हरसः"—इति तु ऋग्वेदीयच्छन्दः, सामवेदीयस्तु "हरसे"—इति, पद-ग्रन्थे तथैव दर्शनात्, व्याख्यातञ्चैवमेव विवरणकृताऽपि—'हरसे दीप्त्यै'—इति।

¶ ऋ० वे० ९, ७, ३५।

"समीचीनासः" समीचीनाः* "जानयः" जाति-सदृशाः "एकस्य" सोमस्य "पदं" स्थानं "पिप्रतः" पूरयन्तः "सप्त होतारः"† यज्ञे "आसत" व्याप्नुवन्ति ॥

"आसत"-"आसत"—इति पाठौ, 'जानयः"-"जामयः" —इति च ॥ १० ॥

अथैकादशी।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
नाभानाभिन्नआददे चक्षुषासूर्य्यन्दृशे।
२ १र २ ३ १ २
कवेरपत्यमादुहे ॥ ११ ‡ ॥

"नाभिं" यज्ञस्य नाभिभूतं सोमं "नः" अस्माकं "नाभा" नाभौ अहम् "आददे" सोमं पीत्वा नाभि-स्थाने करोमीत्यर्थः। किमर्थम्? "चक्षुषा" "सूर्यं" "दृशे" द्रष्टुम्। किञ्च, "कवेः" क्रान्त-कर्म्मणः सोमस्य "अपत्यम्" अंशुम् "आ दुहे" आ पूरयामि¶ ॥

"चक्षुषासूर्यन्दृशे"—"चक्षुश्चित्सूर्यैसचा"—इति पाठौ ॥ ११ ॥

* 'समीचीनासः—समीचीन-गुणाः सोमाः'—इति वि०।

† 'होतारः—देवानामाह्वातारः। सप्त जानयः—सप्त जनाः, वषट्कारिणः— होता, मैत्रावरुणः, ब्राह्मणाच्छंसी, पोता, नेष्टा, अच्छावाकः, आग्नीध्र इति' —इति वि०।

‡ ऋ० वे० ६, ७, २५।

¶ 'कवेः अपत्यम् आदुहे—कविर्मेधावी ब्राह्मणः तस्यापत्यत्वं गच्छति सोमः, तेन निष्पादितत्वात्। आदुहे दुहते दशापवित्रात् सोमम्'—इति वि०।

अथ द्वादशी।

३ १ ३ १ ३ २ ३ १ २ ३ १ ३ १ २ ३ २
अभिप्रियन्दिवस्पदमध्वर्युभिर्गुहाहितम्।

१ २ ३ १ २
सूरःपश्यतिचक्षसा॥ १२ *॥ १

"सूरः" सुवीर्यः इन्द्रः "चक्षसा" चक्षुषा "दिवः" दीप्तस्य आत्मनः "प्रियं पदम्" अध्वर्युभिः "गुहा" गुहायां हृदये "हितं" निहितं पीतं सोमम्† "अभि पश्यति"॥

"प्रियम्"-"प्रिया"—इति पाठौ‡॥ १२॥

॥ पार्थम्॥ ओ३होऽ३होयि। प्रकावियाम्। उश्ने। वब्रुवाणाः। देवोदेवा। ना३ञ्जनि। माविवक्तौ। महिव्रताः। शुचिव। धूःपवाकाः। पदावरा। हो३अभि। आ३४३यि। तीऽ३रा५ यिभा ६ ५ ६न्॥(१)

प्रहꣳसासाः। तृपला। वग्नुमच्छा। अमादस्ताम्। वृषग। णाअयासूः। अङ्गोषिणाम्। पवमा। नꣳ

---

* ऋ० वे० ९, ७, ३५।

† 'गुहायां द्रोणकलशे हितं सोमाख्यं पदम्'—इति वि०।

‡ "चक्षसा"—"चक्षुषा"—इति च बोध्यम्।

३ ४ ५ २ १ २ १ २ २ ४
सखायाः। दुर्मर्षंवा। णाश्म्प्रव। दा३४३। तीश्सा

२र १ २ १ र १ २ ४ ५
पूर्काई५६म् ॥(२) सयोजनायि। उरुगा। यस्यजूतीम्।

२ र १र २ १ २ १ ४ ५ २ र १
वृथाक्रीडा। जा ३ म्प्रिम। तेनगावाः। परीणसाम्।

२ १ र २ ३ ४ ५ २ २ २ र १
कृणुते। तिग्मशृङ्गाः। ओ३हो३वायि। दिवाहरा

१ १ र २ १ ४
यिः। ददृशे। ना३४३। क्ता३मा५ज्राई५ई:(३) ॥५*॥ [१]

१र र १ २ १र
॥ वाराहम् ॥ हाउहाउ। ऊप। प्रकावियाम।

२ १ र २ ३ ४ ५ २ र१ रर २ १ २
उशने। वब्रुवाणाः। देवोदेवा। ना३ञ्जनि। मा

२ ४ ५ २ १ २ २ ३ ४ ५ १ २र
विवक्ती। महिव्रताः। शुचिवा३। धूःपवाकाः। पदा

२ १ २ २ ४
वरा। हो ३ अभि। आ ३ ४ ३ यि। ती३रा५यिभा६

२ १ र १ १ र २ ३ ४ ५ २
४ ६न ॥(१) प्रहᳲसासाः। तृपला। वग्नुमच्छा। अ

१र २ १ २ ३ ४ ५ २ १र
मादस्ताम्। वृषग। णाअयासूः। अङ्गोषिणाम्।

२ २ ३ ४ ५ २ १ २ ० १ २
पवमा। नᳲसखायाः। दुर्मर्षंवा। णा३ंप्रव। दा

● ऊ० गा० ६प्र० २अ० ५सा०।

२ ४ १ १र २ १
३४३ । तो३सा५का६५६म् ॥(२) सयोजतायि । उरु

र २ ३ ४ ५ २ १र र २ १ १ २
गा । यस्यजूतीम् । वृथाक्रीडा । ता३भ्मिम । तेन

४ ५ २१र २ १ र २ ३ ४ ५ २र
गादाः । परीणसाम् । कृणुते । तिग्मशृङ्गाः । द्दाउ

र १ १ १र २ १ र २ २
द्दाउ । क्रप् । दिवाहरायिः । ददृश्रोना३४३ । क्ता

४
३मा५र्त्रा६५६ः(३) ॥ १८ * ॥ [२]

२ र १ २ १र
॥ प्रवङ्गार्गवम् ॥ प्रक्राावियाम् । उशनेवा । ब्रू

१र २र र १र २र १ १
२वाणाः । देवोदेवा । नाञ्जनिमा । वा२यिवक्तायि ।

२ १ २ १ १र २ र १
अहिव्रताः । शुचिबन्धः । पा२वाकाः । पदावरा ।

२र १ १र १ २ १र
होभियायि । तो२रेभा३नाउ ॥(१) प्रहंसासाः ।

२ १ र १ २ र १ २ १
तृपलावा । मृ२मन्वा । अमादस्ताम् । वृषगणाः ।

१र २ र १ २ १ र १र
आ२थासूः । अङ्गोषिणाम् । पवमानाम् । सा२खा

२ १ २ १ १र २ १
याः । दुर्मर्षंवा । साप्रवदाः । तो२साका३माउ ॥(२)

* ऋ० मं० ९सू० ९६ऋ० १८सा० ।

२ र १   २ १ र   १र   १र १र
सयोजतायि। उरुगाया। श्वा२जूतीम्। वृथाक्रीडा।

२ १   १र   २र १   २ १र
तम्मिमते। ना२गावाः। परीणसाम्। कृणुतेतायि।

१   २ र १   २ १ र   १ १
ग्मा२ष्टगाः। दिवाचरायिः। दहशेना। क्ता२मृज्रा

१ १ १ १
३१उ। वा२३४५ः(३) ॥ २ * ॥[३]

३ ५   ३ २   ४ ५
॥ कुत्ससारथीयम् ॥ होऽ४वा। उऊवा३। होवा।

२१र २ १   २ १ र   २ ३ ४ ५   १र१र २र   २
प्रकावियाम्। उश्नने। बब्रुवाणाः। देवोदेवा। ना

१   २ ३ ४ ५   २ २ १   २ १   १ २
३श्रुनि। माविवक्री। महिव्रताः। शुचिव। भूःप

४ ५   २१र २१   २ १   २ ३ ४ ५   १
वाकाः। पदावरा। होइअभि। ऐतिरेभान्॥(१) प्र

१ २र १   २ १ र   २ ३ ४ ५   २१र २ १   २ १
हꣳसासाः। तृपला। वग्नुमच्छा। अमादस्ताम्। वृष

२ ३ ४ ५   २१र २१   २ १ र   २ ३४
ग। णायअासूः। अङ्गोषिणाम्। पवमा। नꣳसखा

५   २ १ २ १   २   १   २ ३ ४ ५   २
याः। दुर्मर्षंवा। णा३प्रव। दन्तिसाकाम् ॥(२) स

१ २ १   २ १ र   २ ३ ४ ५   ११र२र १   २
योजतायि। उरुगा। श्वसजूतीम्। वृथाक्रीडा। ता

* ऊ० गा० १३प्र० २अ० १खा०।

१ १ २ ३ ४ ५ २ १र २ १ २ १ र २ ३
इम्मिम। तैनगावाः। परीणसाम्। कृणुते। तिग्म

४ ५ २ १र २ १ २ १ र २ ३ ४ ५ ३
शृङ्गाः। दिवाहराायिः। ददृशे। नक्तमृज्राः। हो४

५ २ २ ३ ४ ५
वा। उक्थाइ। होवाइहाउवा(३) ॥ ६ * ॥ [४] १

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य

प्रथमः खण्डः ॥ १ ॥

---

अथ द्वितीयखण्डे —

असृग्रमिति द्वादशर्चं† प्रथमं सूक्तम् ;

तत्र, प्रथमा ।

१ २ ३ १ २ ३ १र २र ३ १ २ ३ १ २
असृग्रमिन्दवःपथाधर्मन्नृतस्यसुश्रियः ।

३ १ २ ३ १ २
विदानाअस्ययोजना ॥ १ ‡ ॥

"अस्य" अनेन यजमानेन कृतान् "योजना" तद्देवतायोग्यान् सम्बन्धान् "विदानाः" जानन्तः "सुश्रियः" शोभनश्रयणाः "असृग्रम्" हविर्धानात् सृज्यन्ते ॥

"योजना"-"योजनम्"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० १२प्र० १ख० ६गा० ।

† 'द्वितीयो द्वादशर्चः'—इति वि० पाठः-इति यावत् ।

‡ ऋ० वे० ६, ७, १८ ।

अथ द्वितीया।

२उ ३ १ २ ३ २ ३ १ २ ३ १र २र
प्रधारामधोअग्रियोमहीरपोविगाहते।
३ २ ३ १ २ ३ १ २
हविर्हविःषुवन्द्यः॥ २ †॥

"हविःषु" हविषां मध्ये "वन्द्यः" स्तुत्यः "हविः" हविरात्मकः यः सोमः "महीः" महतीः "अपः" वसतीवरीः "विगाहते", तस्य "मधोः" सोमस्य "अग्रियः" मुख्या धाराः प्रपतन्तीत्यर्थः॥

"मधोः"-"मध्वः"—इति पाठौ॥ २॥

अथ तृतीया।

२ ३ १ ३ २ ३ ३ १र २र ३ १ २
प्रयुजावाचोअग्रियोवृषोअचिक्रदद्वने।
२ ३ २ ३ १ २ ३ १
सद्माभिसत्योअध्वरः॥ ३ ‡॥

"अग्रियः" हविषां मध्ये मुख्यः सोमः "युजाः" युक्ताः "वाचः" प्रकरोतीत्यर्थः। एतदेव दर्शयति—"वृषः"¶ कामानां वर्षकः "सत्यः" सत्यभूतः "अध्वरः" हिंसा-वर्जितः सोमः

* "हविष्षु"—इति ख० ग० पु०-पाठः।

† ऋ० वे० ९, ७, २८।

‡ ऋ० वे० ९, ७, २८।

¶ "वृषोअचिक्रदत्"—इति मूलस्थ "वृषः", "अचिक्रदत्"—इति छेदमवलम्ब्य व्याचष्टे सायणः, परमेष पदमन्थ-विरुद्धः तत्र "वृषा", "उ", "अचिक्रदत्"—इति छेद-दर्शनात्; अतएव विवरणकार आह—'वृषा सेक्ता, उ इति पदपूरणः'—इति।

"सप्ति" यथाश्वः "अभि" प्रति "वने" उदके अचिक्रदत् शब्दं करोतीत्यर्थः॥

"हृषोअचिक्रदत्"—"हृषावचक्रदत्"—इति पाठौ॥ ३॥

अथ चतुर्थी।

२ ३ १२ २२ ३ २ ३ १ २ ३ १२ १२
परियत्काव्याकविर्नृम्णापुनानोअर्षति।
१२ ३ १ २
स्ववाजीसिषासति॥ ४ *॥

"कविः" क्रान्तकर्मा सोमः "नृम्णा" नृम्णानि बलानि† "पुनानः" शोधयन् "काव्या" काव्यानि कवि-कर्माणि स्तोत्राणि "यद्" यदा "परि अर्षति" परिगच्छति, तदा "स्वः" स्वर्गं "वाजी" बलवान् अन्नवान्वेन्द्रः‡ "सिषासति" यागं प्रत्यागन्तुं स्वकीयं बलं सम्भक्तुमिच्छति॥

"पुनानः"--"वसानः"—इति पाठौ॥ ४॥

अथ पञ्चमी।

१२ ३ २उ ३ २ ३ १ २
पवमानोअभिस्पृधोविशोराजेवसीदति।
१ २ ३ १ २ ३ १ २
यदीमृण्वन्तिवेधसः॥ ५ ¶॥

---

* ऋ० वे० ६, ७, २८।

† 'बलवा धनेन'—इति वि०।

‡ 'वाजी—वेगवान्, अथवा चरुपुरोडाशादि-लक्षणेनान्नेनान्नवान् स्वर्गलोकं यजमानस्य साधयति'—इति वि०।

¶ ऋ० वे० ६, ७, २९।

"यद्" यदा "ईम्" एनं* सोमं "वेधसः" कर्मणां कर्त्तारः ऋत्विजः† "ऋण्वन्ति" प्रेरयन्ति, तदा "पवमानः" चरन्नेव सोमः "स्पृधः" स्पर्द्धमानान् याग-विघ्नकारिणः राक्षसादीन् "अभि सीदति" नाशयितुमभिगच्छति। तत्र दृष्टान्तः—"विशः राजा इव" यथा राजा विशः स्पर्द्धमानान् मनुष्यान् नाशयितु-मभिगच्छति तद्वत् ॥ ५ ॥

अथ षष्ठी।

२ ३ २३ १ २ ३१उ ३ १ २
अव्यावारैःपरिप्रियोहरिर्वनेषुसीदति।
३ १ २ ३१
रेभोवनुष्यतेमती ॥ ६ ¶ ॥

"हरिः" हरितवर्णः "प्रियः" देवानां प्रियतम एव सोमः "वनेषु" उदकेषु§ सम्पृक्तः "अव्याः" अवेः "वारै" वाले "परि सीदति" किञ्च "रेभः" अभिषव-वेलायाम् उपरवेषु शब्दं कुर्वन् "मती" मत्या स्तुत्या‖ "वनुष्यते" सेव्यते ॥ ६ ॥

---

* 'ईम्—इति पदपूरणः'—इति वि०।

† "वेधाः"—इति मेधावि-नामसु निघण्टौ दृश्यते (३, १५)

‡ "अव्यो"—इति ऋ०-पाठः।

¶ ऋ० वे० ६, ७, २९।

§ 'वनेषु उदकेषु सीदति, अथवा वनेषु काष्ठमयेषु द्रोणकलशेषु पयश्चमसादिषु सीदति'—इति वि०।

‖ 'मती—बुद्ध्या ऋत्विग्यजमानानाम्'—इति वि०।

अथ सप्तमी ।

२ ३ १र २र ३ १ २ ३ १र २र
सवायुमिन्द्रमश्विनासाकम्मदेनगच्छति ।

२ ३ १ २ ३ १ २
रणायोअस्यधर्मणा* ॥ ७† ॥

“यः” यजमानः “अस्य” सोमस्य “धर्मभिः”‡ कर्मभिः क्रयणाभिषवादिभिः “रण”¶ रमते, “सः” यजमानः “वायुम्,” इ,, न्द्रम्,” “अश्विना” अश्विनौ च “मदेन” “साकं” सह “गच्छति” प्राप्नोति ॥ ७ ॥

अथाष्टमी ।

२ ३ १र २र ३ २ ३ १ २ ३ १ २
आमित्रेवरुणेभगेमधोःपवन्तऊर्मयः§ ।

३ १ २ ३ १ २
विदानाअस्यशक्मभिः ॥ ८‖ ॥

---

* “धर्मभिः”—इति ऋ०-पाठः ।

† ऋ० वे० ९, ७, १९ ।

‡ धर्मभिरिति ऋग्वेदीयपाठमनुलक्ष्यैवेदं प्रतीक-ग्रहणं व्याख्यानञ्च ; विवरण-कृद्व्याख्यानन्तु सामवेदीयम् तथाहि—‘धर्मणा कर्मणा’—इति ।

¶ “रणाः” दीर्घाभावश्रुतिः “द्व्यचोऽतस्तिङः ( ६, ३, १३५ )”—इति तत्र दीर्घः ।

§ “मित्रावरुणाभगंमध्वः”—इति ऋ०-पाठः ।

‖ ऋ० वे० ९, ७, १८ ।

येषां यजमानानां "मधोः" सोमस्य "ऊर्मयः" तरङ्गाः "मित्रावरुणा"* मित्रावरुणौ देवौ "भगं"† भगाख्यं देवञ्च प्रति "पवन्ते" चरन्ति, ते यजमानाः "अस्य" सोमस्य इदं सोमं "विदानाः" जानन्तः "शक्मभिः" सुखैः‡ सङ्गच्छन्त्विति शेषः ॥ ८ ॥

अथ नवमी।

३ १ २ ३ २उ ३ १ २ २ १ २
अस्मभ्यꣳरोदसीरयिम्मध्वोवाजस्यसातये।
२ ३ १ २ ३ १ २
अवोवसूनिसञ्जितम् ॥ ९¶ ॥

हे "रोदसी" द्यावापृथिव्यौ ! युवां "मध्वः" देवानां मादयितुः "वाजस्य" सोमात्मस्यान्नस्य "सातये" लाभाय§ "अस्मभ्यं" "रयिं" धनं "अवः" अन्नञ्च‖ "वसूनि" वासकान्यन्यान्यपि पश्वादीनि "सञ्जितं" सञ्जयन्तं** प्रयच्छतमित्यर्थः ॥ ९ ॥

---

*, † ऋग्वेदीयपाठानुसारेणेदं प्रतीकग्रहणम्। विवरणकृता तु सुष्ठूच्यते—'मित्रे, वरुणे, भगे-सप्तम्येकवचनं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम्, मित्राय, वरुणाय, भगाय'—इति।

‡ 'शक्माभिः—शक्तैः कर्मभिः'—इति वि०।

¶ ऋ० वे० ६, ७, १९।

§ 'सातये—दानार्थम्'—इति वि०।

‖ अवः—अन्नं यशो बलं वा'—इति वि०।

** 'संयतं—सम्यक् यतम्'—इति वि०।

अथ दशमी।

२ ३१२ ३ १ ३१ २ ३१ २
आतेदक्षम्मयोभुवंवन्हिमद्यावृणीमहे।
२ ३१२३ १ २
पान्तमापुरुस्पृहम्॥ १० *॥

हे सोम! यष्टारो वयं "ते" तव स्वभूतं "दक्षं" बलम् "अद्य"† अस्मिन् यागदिने "आ" आभिमुख्येन "वृणीमहे" सम्भजामहे। कीदृशम्? "मयोभुवं" सुखस्य भावकम् "वह्निं" धनादीनां प्रापकम् "पान्तं" शत्रुभ्यो रक्षकम् "पुरुस्पृहं" बहुभिः स्पृहणीयं कामानाम्॥ १०॥

अथैकादशी।

२ ३ १२ १२ ३ २उ ३ १ २ ३ १ २
आमन्द्रमावरेण्यमाविप्रमामनीषिणम्।
२ ३ १ २३१ २
पान्तमापुरुस्पृहम्॥ ११ ‡॥

हे सोम! "मन्द्रं" मदकरं स्तुत्यं वा त्वाम् "आ वृणीमहे" "वरेण्यं" सर्वैर्वरणीयं सम्भजनीयञ्च; किञ्च "विप्रं" मेधाविनं त्वां तथा "मनीषिणं" मनसईषा मनीषा तद्वन्तं स्तुतिमन्तं वा त्वामावृणीमहे [प्रत्येकं विशेषणापेक्षया आ-इत्युपसर्गः

* ऋ० आ० ६, १, २, १ (२ आ० ५६ पृ०)=ऋ० वे० ७, २, ६, ५।
† मूले तु "निपातस्य च (६, ३, १३६)"—इति दीर्घान्तः "अद्या"—इति।
‡ ऋ० वे० ७, २, ६, ४।

स्रुत:* ; किञ्च "पान्तं" सर्वेषां रक्षकम् "पुरुस्पृहं" बहुभिः स्पृहणीयं च त्वां सम्भजामहे ॥ ११ ॥

अथ द्वादशी ।

२ ३ १र २र ३ र ३ १ २ ३ १
आरयिमासुचेतुनमासुक्रतोतनूष्वा ।
२ ३ १ २ ३ १ २
पान्तमापुरुस्पृहम् ॥ १२ † ॥ २

हे "सुक्रतो" शोभन-प्रज्ञ सोम ! त्वदीयं "रयिं" धनम् वयम् "आ"‡ वृणीमहे । किञ्च, "सु चेतुनम्" [ चिती सञ्ज्ञाने ( भ्वा० प० ) भावे औणादिक उन प्रत्ययः ] सुज्ञानञ्च । किञ्च "तनूषु" अस्मत्पुत्रेषु च धनं सुज्ञानञ्च त्वम् "आ" विधेहि यद्वा पुत्रार्थं वयमावृणीमहे । तथा "पान्त" सर्वस्य रक्षकं "पुरुस्पृहं" बहुभिर्यष्टृभिः काम्यमानं त्वां सम्भजामहे ॥ १२ ॥ २

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य द्वितीयः खण्डः ¶ ॥ २ ॥

---

* विवरणकारस्त्वन्यथैव व्याचष्टे—'आमन्द्रम्—आनुपूर्व्येण मन्द्रं बलम्'—इति, 'आवरेण्यम्—आभिमुख्येन वरेण्यं तत्'—इत, 'आविप्रम्—अतिशयेन विपश्चितम्'—इत्यादि च ।

† ऋ० वे० ७, २, ६, ५ ।

‡ अत्राप्यन्यथा व्याख्यातं विवरणकृता—'आरयिम्—आभिमुख्येन धनवन्तम्'—इत्यादि ।

¶ 'उक्तं बहिष्पवमानम्'—इति वि० ।

अथ तृतीय-खण्डे,*प्रथम-तृचे—

प्रथमा ।

२ १  २  ३ १  १ ३ १ २ ३ १
मूर्द्धानन्दिवोअरतिम्पृथिव्या

२   ३ १ १ २उ  ३ . २ १ २
वैश्वानरम्तआजातमग्निम् ।

३ १  ३ २  ३ १ २ ३ १  १
कविंसम्राजमतिथिञ्जनाना

३ १ ३ १ २      ३ १
मासन्नःपात्रञ्जनयन्तदेवाः ॥ १ † ॥

"मूर्द्धानं" शिरोभूतं, कस्य ? "दिवः" द्युलोकस्य, "पृथिव्याः" प्रथितायाः भूमेः "अरतिं" गन्तारम् [यद्वा, गन्तव्यं स्वामिनं], "वैश्वानरं विश्वेषां नराणां सम्बन्धिनम्, "ऋते" [ऋतमिति सत्यस्य यज्ञस्य वा नाम ( निघ० ३,१०,६ )। निमित्त-सप्तम्येषा (२,३,३६वा०)]ऋतनिमित्तम् "आ" आभिमुख्येन जातं सृष्ट्यादावुत्पन्नं "कविं" क्रान्तदर्शिनं "सम्राजं" सम्यग्राजमानं "जनानां" यजमानानाम् "अतिथिं" हविर्वहनाय सततं गन्तारं [ यद्वा, अतिथिवत् पूज्यम् "आसन्" आसनि [ द्वितीयार्थे सप्तमी (३,१,८५), अग्नि-लक्षणेनास्येन हि देवा हवींषि भुञ्जते] "नः" अस्माकं "पात्रं" पातारं रक्षकं वैश्वानरमग्निं

---

* 'इदानीमाख्यानि'—इति वि० ।

† ऋ० म्या० १, १, १, ५ (१ भा० २०४ पृ० ) = ऋ० वे० ७, २४ = ऋ० वे० ४, ५, ६, १ ।

“देवाः” स्तोतारः ऋत्विजः देवा एव वा “आ अनयन्त” यज्ञाभिमुख्येन अजीजनन् अरण्योः सकाशात् उदपादयन्॥

“आसन्नःपात्रम्”-“आसन्नापात्रम्”—इति पाठौ॥ १॥

अथ द्वितीया।

१र २र ३ १ २ ३
त्वांविश्वेअमृतजायमानꣳ

२ ३ २ ३ २ ३ १र २र
शिशुन्नदेवाअभिसन्नवन्ते।

१ २ १ २ २ १ २ ३
तवक्रतुभिरमृतत्वमायन्

१र २ ३ २ ३ १र २र
वैश्वानरयत्पित्रोरदीदे॥ २ *॥

हे “अमृत” मरण-रहिताग्ने! “विश्वे देवाः” स्तोतारः “जायमानम्” अरण्योः सकाशात् उत्पद्यमानं त्वां “शिशुं न” पुत्रमिव “अभि सं नवन्ते” अभिसंस्तुवन्ति [ यद्वा, दीव्यन्तीति देवा रश्मयः ते सर्वे जायमानं त्वामभिसन्नवन्ते अभिगच्छन्ति, यथा पितरः पुत्रमभि गच्छन्ति ], अपि च हे वैश्वानर अग्ने! “यद्” यदा “पित्रोः” पालयित्र्योः द्यावा-पृथिव्योर्मध्ये “अदीदेः” दीप्यसे, तदानीं “तव” त्वदीयैः “क्रतुभिः” कर्मभिः ज्योतिष्टोमादिभिर्यागैः “अमृतत्वम्” देवत्वम् “आयन्” यजमानाः प्राप्नुवन्ति॥ २॥

---

* ऋ० वे० ४, ५, ९, ४।

अथ तृतीया।

१ २ ३ १ २   १२    ३ २
नाभिंयज्ञाना౮सदन౮रयीणां

३ १ २ ३ १ ३ १र २र
महामाहावमभिसन्नवन्त।

२   २ ३क १र  ३ १ २
वैश्वानर౮रथ्यमध्वराणां

३ १ २ ३ १ २     ३ २
यज्ञस्यकेतुञ्जनयन्तदेवाः॥ २ *॥ ३.

"नाभिं यज्ञानां"†, "सदनं रयीणां" धनानां स्थानमेक-निलयं, "महां" महान्तम् "आहावम" आह्वयन्ते अस्मिन्नाहुतय इत्याहावः तादृशं [यद्वा, वृष्ट्युदक-धाराणामाहाव-स्थानीय मेव-भूतम्] अग्निम् "अभि सं नवन्त" स्तोतारः सम्यक् स्तुवन्ति। तथा "वैश्वानरं" विश्वेषां नराणां सम्बन्धिनम् अध्वराणां यज्ञानां "रथ्यं" रथिनं, यथा रथी स्व-रथं नयति तद्वन्नेतारं रंहितारं गमयितारं‡ "यज्ञस्य" "केतु" प्रज्ञापकम्¶ एवं-विधमग्निं "देवाः" स्तोतार ऋत्विजो देवा एव वा§ "जन-यन्त" जनयन्ति मन्थनेनोत्पादयन्ति॥ २॥ ३

---

* ऋ० वे० ४, ५, ८, २।

† 'नाभिं यज्ञानां—प्रधानभूतं सदनम्'—इति वि०।

‡ 'रथ्यं—रथभूतं रंहणीयं वा'—इति वि०।

¶ 'केतु—ध्वजम्'—इति वि०।

§ 'देवाः—दानवन्त ऋत्विजः'—इति वि०।

अथ द्वितीय-तृचे—

प्रथमा।

१ २ ३ १ २ ३ १ २ ३ २ १ २
प्रवोमित्रायगायतवरुणायविपागिरा।
१ २ १ २ ३ २
महित्तत्रावृतम्बृहत्॥ १ *॥

हे मदीया ऋत्विजः! "वः" यूयमित्यर्थः। "मित्राय" "वरुणाय" "विपा" व्याप्तया "गिरा" स्तुत्या "गायत" स्तुतिं कुरुत [स्तुत्या स्तुतेत्येतत् पाकं पचतीतिवत्]। हे "महित्तत्रौ" प्रभूत-बलौ युवाम् "ऋतं" यज्ञं † "बृहत्" महत् अपि प्रशस्तं स्तुत्यर्थमागच्छतमिति शेषः [अथवा "महत्" प्रभूतम् "ऋत" स्तोत्रं शृणुतमिति शेषः॥ १॥

अथ द्वितीया।

३ २ १ २ ३ १ २ ३ २ ३ १र २र
सम्राजायाघृतयोनीमित्रश्चोभावरुणश्च।
३ २ ३ १ २ ३ २
देवादेवेषुप्रशस्ता॥ २ ‡॥

"या" यौ "मित्रश्च" "वरुणश्च" [परस्परापेक्षया च-शब्दः] "उभा" उभौ "सम्राजा" सम्राजानौ सर्वस्य स्वामिनौ "घृतयोनी"

* ऋ० वे० ४, ४, ६, १।

† 'ऋतं सत्यम्'—इति वि०।

‡ ऋ० वे० ४, ४, ६, १।

उदकस्योत्पादकौ "देवा" द्योतमानौ "देवेषु" मध्ये "प्रशस्ता" प्रकर्षेण स्तुत्यौ तौ स्तुत्या गायतेति पूर्वेणान्वयः ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ १२ ३ २ ३ १ २
तानःशक्तम्पार्थिवस्यमहोरायोदिव्यस्य ।
१ २ ३२ ३ १ २
महिवाङ्क्षत्रन्देवेषु ॥ ३ * ॥ ४

"ता" तौ देवौ "नः" अस्मदर्थं "पार्थिवस्य" पृथिवी-सम्बन्धस्य "दिव्यस्य" दिविभवस्य च "महः" महतः "रायः" धनस्य "शक्तं" समर्थम्, भवतं दातुमिति शेषः । हे देवौ ! "वां" युवयोः "महि" महत् पूज्यं "क्षत्रं" बलं देवेषु प्रसिद्धं, स्तुम इति शेषः ॥ ३ ॥ ४

अथ तृतीय-तृचे—

प्रथमा ॥

१२ ३२ २ ३ १ २ ३ १ २
इन्द्रायाहिचित्रभानोसुताइमेत्वायवः ।
१ २ ३ १ २ ३ १ २
अण्वीभिस्तनापूतासः ॥ १ † ॥

"चित्रभानो" हे विचित्र-दीप्ते "इन्द्र !" अस्मिन् कर्म्मणि "आयाहि" आगच्छ । "सुताः" अभिषुताः "इमे" सोमाः

* अत्रैव पुनः ६, ३, ११, १=ऋ० वे० ८, ८, ६, २ ।

† ऋ० वे० ११, २=ऋ० वे० १, १, ५, ४ ।

"त्वायवः" त्वां कामयमाना वर्त्तन्ते । "अण्वीभिः"* [ अङ्गुलिनामैतत् ( निघ० २, ५, २ ) ] ऋत्विजा मङ्गुलिभिः सुता इत्यन्वयः। किञ्च, ते सोमाः "तना" नित्यं "पूतासः" शुद्धाः ऊर्णा-पवित्रेण शोधितत्वात् ॥ १ ॥

अथ द्वितीया ।

१र २र ३ २ ३ १र २र ३ १ २
इन्द्रायाहिधियेषितोविप्रजूतःसुतावतः ।
२ ३ १ २ ३ १२
उपब्रह्माणिवाघतः ॥ २ † ॥

हे "इन्द्र!" त्वम् "आयाहि" अस्मिन् कर्मणि आगच्छ । किमर्थम्? "वाघतः" [ ऋत्विङ्नामैतत् ( निघ० ३, १८, ३ )] ऋत्विजः "ब्रह्माणि" वेद-रूपाणि स्तोत्राणि "उप" एतुम् । कीदृशस्त्वम्? "धिया" अस्मदीयया प्रज्ञया "इषितः" प्राप्तः, अस्मद्भक्त्या प्रेरित इत्यर्थः। "विप्रजूतः" यथा यजमान-भक्त्या प्रेरितः तथान्यैरपि विप्रैः मेधाविभिः ऋत्विग्भिः प्रेरितः। कीदृशस्य? "वाघतः?" "सुतावतः" अभिषुत-सोम युक्तस्य ॥२॥

अथ तृतीया ।

१र २र ३ १ १ ३ २ ३ १ २
इन्द्रायाहितूतुजानउपब्रह्माणिहरिवः ।
३ १ २ ३ १ २
सुतेदधिष्वनश्चनः ॥ ३ ‡ ॥ ५

---

* 'अण्वीभिः—सूक्ष्माभिः धीभिः'—इति वि०।

† ऋ० वे० १, ६, ५, ५।

‡ ऋ० वे० १, १, ५, ६।

[ हरि-शब्दः इन्द्र-सम्बन्धिनोरश्वयोर्नामधेयम् "हरी इन्द्रस्य, लोहितोऽग्नेः ( नि० १,१५,१-२ )"—इति तदीयाश्व-नामत्वेन पठितत्वात्] हे "हरिवः" अश्व-युक्तेन्द्र ! त्वं "अन्नानि" आनेतुम् "आ याहि"। कीदृशस्त्वम्? "तूतुजानः" त्वरमाणः । आगत्य च अस्मिन् "सुते" सोमाभिषव-युक्ते कर्म्मणि "नः" अस्मदीयं "चनः" [ अन्न-नामैतत् ( निरु० नै० ६,१६ ) ] हविर्लक्षणमन्नं "दधिष्व" धारय स्वीकुर्व्वित्यर्थः ॥ ३ ॥ ५

अथ चतुर्थ-तृचे—

प्रथमा ।

१ २   ३ १ २ १ ३ २ ३ १ २   ३ १ २
तमीडिष्वयोअर्च्चिषावनाविश्वापरिष्वजत् ।

३ २ ३ १ २ ३ १ २
कृष्णाकृणोतिजिह्वया ॥ १ * ॥

हे स्तोतः ! "तम्" अग्निम् "ईडिष्व" स्तुहि, "यः" अग्निः "अर्च्चिषा" ज्वाला-रूपेण तेजसा "विश्वा" सर्व्वाणि "वना" वनान्यरण्यानि "परिष्वजत्" परिष्वजति परितो वेष्टयति, यश्च तानि वनानि "जिह्वया" ज्वालया दग्ध्वा "कृष्णा" कृष्णवर्णानि "कृणोति", तमीडिष्वेति सम्बन्धः ॥ १ ॥

---

* ऋ० वे० ४, ८, २५, ६ ।

अथ द्वितीया।

१ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
यद्द्धआविवासतिसुम्नमिन्द्रस्यमर्त्त्यः।

२ १ २ ३ १ २ ३ २
द्युम्नायसुतराअपः॥ २ * ॥

"यः" "मर्त्त्यः" मनुष्यः "इद्धे" दीप्ते अग्नौ "सुम्नं" सुखकरं हविः "इन्द्रस्य" [चतुर्थ्यर्थे षष्ठी (२, ३, ६२)] इन्द्राय "आविवासति" परिचरति प्रयच्छति, तस्य मर्त्तस्य "द्युम्नाय" द्योतमानायान्नाय तदर्थं "सुतराः" सुखेन तरणीयाः "अपः" उदकानि वृष्ट्यात्मकानि, इन्द्रः करोत्विति शेषः॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १ ३ १ २
तानोवाजवतीरिषआशून्पिपृतमर्वतः।

१ २ ३ २ ३ १ २
एन्द्रमग्निञ्चवोढवे॥ ३ † ॥ ६

हे इन्द्राग्नी! "ता" तौ युवां "वाजवतीः" अन्नवतीः "इषः" इष्यमाणा "वृष्टीः" [यद्वा, वाजो बलं तद्वतीः इषः अन्नानि] "आशून्" शीघ्रगान् "अर्वतः" अश्वांश्च "नः" अस्मभ्यं "पिपृतम्

* ऋ० सं० ४, ८, २९, १।

† ऋ० सं० ४, ८, २९, २।

पूरयतम् प्रयच्छतम् । किमर्थम् ? "इन्द्रम्" "अग्निञ्च" "आ वोढवे" आ समन्तात् वोढुं हविर्भिः प्रापयन्तु ॥ ३ ॥६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य

तृतीयः खण्डः * ॥ ३ ॥

---

अथ चतुर्थ-खण्डे,† प्रथम-तृचे—

प्रथमा ।

१ २ ५ २ ३ १ २ ३ २उ
प्रोअयासीदिन्दुरिन्द्रस्यनिष्कृतꣳ
२ २ ३ २र २र ३ १ २
सखासख्युर्नप्रमिनातिसङ्गिरम् ।
१ २ ३ २ ३ १ २ ३
मर्यइवयुवतिभिःसमर्षति
१ २ ३ १ २ ३ १ २ २ २
सोमःकलशेशतयामनापथा ॥ १ ‡ ॥

"इन्दुः" सोमः "इन्द्रस्य" "निष्कृतं" संस्कृतं स्थान मुदरं "प्रो अयासीत्" प्रैव गच्छति ; गत्वा च "सखा" सखिभूतः "सख्युः"

---

* 'उक्तं प्रातःसवनं चतुर्विंशस्तौमिकम्'—इति वि० ।

† 'इदानीं माध्यन्दिनं सवनम् । इयायवत्रधारयेति सन्ति-प्रभृतीनि सामानि माध्यन्दिनीयसार्थानि, पुनानः सोमधारयेति कन्व-रथन्तर-प्रभृतीनि सामानि बार्हस्पत्यानि'—इति वि० ।

‡ ऋ० सा० ६, १, १, ४ (२भा० १७९पृ०)=ऋ० सं० ७, २, ११, १।

इन्द्रस्य "सक्थिरं" सम्यग् गिरयाधारभूतम् उदरं "न" "प्र भिनाति" हिनस्ति, किञ्च "मर्य इव युवतिभिः" मर्त्तो यथा तरुणीभिः स्त्रीभिः सह सङ्गतो भवति तद्वदयमपि सोमो युवतिभिर्मिश्रण-शीलादिभिर्वसतीवरीभिरद्भिः सह "समर्षते" सङ्गच्छते अभिषव-काल-पश्चात् सोमः "शतयामना" अनेक-यामन-साधन-विस्तोपेतेन "पथा" मार्गेण दशापवित्र-सम्बन्धिना "कलशे" द्रोणकलशे गच्छतीति शेषः यद्वैकमेव वाक्यम्—यथा मर्यो मर्त्त्यो युवतिभिः सह सङ्गच्छते एवं कलशे शत-यामना पथा सङ्गच्छते॥

"शतयामना"—"शतयाम्ना"——इति पाठौ॥ १॥

अथ द्वितीया।

२ ३ १ २ ३ १ २ ३ १ २
प्रवोधियोमन्द्रयुवोविपन्युवः

२ १ २ ३ १ २
मनस्युवःसंवरणेष्वक्रमुः।

२ ३ १ १ २ ३क २र २ १ २
हरिंक्रीडन्तमभ्यनूषतस्तुभो

१ ३१२ २ ३१ २
भिधेनवःपयसेदभिश्रयुः॥ २ *॥

हे सोमाः "वः" युष्माकं "धियः" ध्यातारः† "मन्द्रयुवः" मदकरं शब्दं कामयमानाः "पनस्युवः" स्तुतिं कामयमानाः

* ऋ० वे० ७, ३, १६, २।

† 'धियः—ऋद्धयः'—इति वि०।

"विपन्यवः" [—स्तोतृ-नामैतत्*) स्तोतारः "संवरेषु" वषट्कारा-वरणोपेतेषु याग-ग्रहेषु "प्राक्रमुः" प्रक्रमन्ते। तदेवाह— "स्तुभः" स्तोतारः† "हरिं" हरितवर्णं "क्रीड़न्तं" क्रीड़न-शीलं सोमम् "अभ्यनूषत" अभिष्टुवन्ति "धेनवः" अपि "पयसा" क्षीरेण क्षीरेणैव "इत्" इमं सोमम् अभिलक्ष्य "अशिश्रयुः" अधिकं श्रीणन्ति ॥

"संवरणेषु"-"संवसनेषु"—इति पाठौ, "हरिङ्क्रीड़न्तं" -"सोमम्मनीषा"—इति च, "पयसेदशिश्रयुः"-"पयसेमशिश्रयुः" —इति च ॥ २ ॥

अथ तृतीया ।

१ २ ३१ २ ३ १ २ ३ २ ३
आनःसोमसंयतम्पिप्युषीमिष

२ ३ १ २ ३ १ २ ३ १ २
मिन्दोपवस्वपवमानऊर्मिणा ।

२ ३ १ २ ३ २उ ३ १ २
यानोदोहतेत्रिरहन्नसश्चुषी

३१२ ३१२ १ २ ३ १ २
क्षुमद्वाजवन्मधुमत्सुवीर्य्यम् ॥ ३ ‡ ॥ ७

---

* "विपन्यवः"—इति निघण्टौ मेधावि-नामसु सप्तदशं पदम् ( ३, १५ ) ।

† 'स्तुभः—स्तोभकाः'—इतिवि० ।

‡ ऋ० वे० ७, ३, ११, ३ ।

हे "इन्दो" दीप्त! "सोम!" "पवमान:" त्वं "न:" अस्माकं "संयतं" सङ्गृहीतं "पिप्युषीं" प्रवृद्धम्* "इषम्" अन्नम् "ऊर्म्मिणा" प्रवाह-रूपेण तदीयेन रसेन "पवस्व" प्रयच्छेत्यर्थः। "या" इट् "न:" अस्माकम् "अहन्" अहनि अह्नः "त्रि:" त्रिषु सवनेषु "असश्चुषी" अप्रतिबन्धेन† "दोहते"। किम्? "द्युमत्" शब्दोपेतं सर्व्वत्र श्रूयमाणं "वाजवत्" बलवत् "मधुमत्" माधुर्य्योपेतं "सुवीर्य्यं" शोभन-सामर्थ्यं पुत्रं दोहते। तामिषं पवस्वेति समन्वयः॥

"ऊर्म्मिणा"-"अभियम्"—इति पाठौ॥ २॥ ७

२र १र २ १
॥ प्रवङ्गार्गवम्॥ प्रोअयासायित्। इन्दुरिन्द्रा। स्या
१ २ र १ २ १ १
२निष्कृताम्। सखासख्यूः। नप्रमिना। ता२बिस
२ १ २ १ १
ञ्चिराम्। मर्य्यइवा। युवतिभायिः। सा२मर्षतायि।
१र १ २र १ १र २ २र
सोमःकला। शेशतया। मा२नापथा३१उ॥(१) प्रवो
१ २ १ १ २ १
धियो। मन्द्रयुवो। वा२यिपन्युवाः। पनस्युवाः।
२१ १ २ १र २ १
संवरणायि। पू२र्वक्रमूः। हरिङ्क्रीडा। तमभ्यनू। पा

* 'पिप्युषीं'—पानेच्छाम्'—इति वि०।

† 'असश्चुषी—आनुपूर्व्वेण'—इति वि०।

१   १ १र   १ १   १
२तस्तुभाः । अभिधेना । वःपयसायित् । आ२शिश्र

२ १   २र १र   २ १   १र
यू३वाउ ॥(२) आनःसोमा । संयतम्पायि । प्यू२षीमि

२ र १   २ १   १र   २र र
षाम् । इन्दोपवा । स्वपवमा । ना२ऊर्म्मिणा । यानो

१र   २र १   १   २ १र
दोषा । तेश्विरहान् । आ२सस्नुषायि । द्युमद्वाजाः ।

१ १   १र २ १   १ १ १ १
वन्मधुमात् । सू२वीरियाश्माउ । वा२३४५(३) ॥७*॥ [१]

१   र र   २
॥ कावम् ॥ प्रवो । अयासीदिन्दुरिन्द्रा । स्यनि

१   १ र   २ १
ष्कार्ता२म् । सखासख्युर्नप्रमिना । तिसङ्गायिरा२म् ।

२   २ १   १ २ ४ ५
मर्यइवयुवतिभायिः । समर्षातार३यि । सोमा३ःकाला ।

२र १   १ २ ४   २ १
शेश्नतायार३ । मानाश्पा५थाई५६ ॥(१) प्रवोवा । धि

र   १ १   १   २
योमन्द्रयुवो । विपन्यूवा२ः । पनस्युवःसंवरणायि । षु

१   १ र   २ १   १
वक्काम्२ः । हरिंक्रीडन्तमभ्यनू । षतस्तुभार३ः । भा

२ ४५   २ १   १ २   ४
भीश्धेना । वःपयासार३यित् । आशा ३ यिश्रा ५ यू ६

---

* ऊ० गा० ४प्र० १ख० ७सा० ।

१र २ र २ र १
५ ६ ॥(२) आनोवा। सोमसंयतम्पायि। प्युषीमायि

१ र २ र १ १र र
षा२म्। इन्दोपवस्वपवमा। नऊर्म्मायिणा२। यानो

र र २ १ १ २ ४ ५ २
दोह्वतेत्त्रिरह्वान्। असश्रूषा२३यि। त्रूमा३द्वाजा। वं

१ १ २ ४
न्मधूमा२३त्। सूवा३यिरा५याथ५६म(३) ॥ १० *॥ [२]

३र २ ३र ५र १
॥ लौशाद्यम् ॥ प्रो३अयासीत्। इन्दुरिन्द्रा २ ३।

४ २ १ ५ ३ २र ३ ५ १ ४ २
स्या३निष्कृतम्। सखासख्यु:। नप्रमिना२३। तो३स

३ ५ ३ २ ३ ४ १ ४ २ ३ ५
ङ्गिरम्। मर्य्यइव। युवतिभा२३यि:। सा३मर्षति।

३र २ १ ५ १र २ ४
सोम:कला। शतया २ ३। मना३पा५याई५६ ॥(१)

३ २र ३ ५ १ ४ २ ३ ५ २ १ ३ ५
प्रवोधिय:। मद्रयुवो२३। वा३यिपन्युव:। पनस्युव:।

१ ४ २ १ ५ ३ २ ३र ५ १
सवरणा२३यि। षू३वक्रमु:। हरिर्क्रीड। तमभ्यनू२३।

४ १ ३ ५ ३ २ ३र ५ १ १
षा३तस्तुभ:। अभिधेना। व:पयसा२३यित्। अभ्रा

४ ३र २ ३र ५ १
३यिश्रा५यू६५६: ॥(२) आन:सोम। संयतपा २ ३ यि।

---

* ऊ० गा० ६प्र० २खा० १०गा०।

४ १र ३ ५ ३ २र ३ ५ १ ४ १र २
प्यू२षीमिषम् । इन्द्रोपव । स्वपवमा २ ३ । ना३ऊर्म्मि

५र ३र २र ३र ५ १र ४ र २ ५र २ १
णा । यानोदोह । तेत्विरद्धा२३न् । आ३सस्रुषी । वृम

३र ५ १ १ ४
द्वाजा । वन्मधुमा २ ३ त् । सुवा ३ यिरा ५ या ६ ५

६ म् (३) ॥ ११ * ॥ [३]

३र २ ३ ५ २ ३
॥ यज्ञसारथिम् ॥ प्रोऽआया२३४मीत् । इन्दूरा२३

५ १ २ १ २ १ ३ २ २
४यिन्द्रा । स्यानिष्कृता३म् । होयि । सखासा२३४

५ २ ३ ५ १ २ १ २ १
ख्यूः । नप्रामीर२३४ना । तायिसङ्गिरा३म् । होयि ।

३ २ ३ ५ २ ३ ५ १ २ १ २
मर्य्याई२३४वा । युवाती२३४भायिः । सामर्षता३यि ।

१ ३र १ ३ ५ २र २ ५ १ २र
होयि । सोमाःका२३४ला । शोशाता२३४या । माना

१ २ १ ३ १ ३ ५ २ ३
पथा३ । हो२३४५ई ॥(१) प्रवोधी२३४यो । मन्द्रायू२

५ १ २ १ २ १ ३ २ ३ ५
३४वो । वायिपन्युवा३ः । होयि । पनास्यू२३४वाः ।

२ ३ ५ १ २ १ २ १ ३ २ ३
संवारा२३४णायि । पूवक्रमू३ः । होयि । च्चरायिक्वा

* ऊ० गा० ७प्र० २ख० ११सा० ।

२३४यिडा। तमाम्या२३४नू। पातसुभा३:। होयि। अभायिधे२३४ना। व:पाया२३४सायित्। आग्निश्रयू३:। हो२३४५ई॥(२) आना:सो२३४मा। संयाता२३४म्पी। प्यूषीमिषा३म्। होयि। इन्दोपा२३४वा। स्वपावा२३४मा। नाऊर्म्मिणा३। होयि। यानोदो२३४द्दा। तेचोरा२३४ढ्ढान्। आसख्यूषा३यि। होयि। सुमादा२३४जा। वन्माधू२३४मात्। सुवीरिया३म्। हो२३४५ई। डा(३)॥५॥[४]

॥वाराहम्†॥ हाउहाउ। ऊप्। प्रोअयासायित्। इन्दुरि। द्रस्यनिष्कृताम्। सखासख्यू:। नप्रमि। नातिसङ्गिराम्। मर्य्यइवा। युवति। भि:समर्षता यि। सोम:कला। शेमत। या। मनाइपा५या ६ ५

* ऋ० मा० १०म० १स्ना० ५सा०।

† "जगतीवाराहम्"—इति ख० पु०-पाठ:।

१ १२ २ १ १२ ३ ४ ५ २ १
६ ॥(१) प्रवोधियो । मन्द्रयु । वोविपन्युवाः । पनस्यु

२ १ १२ ३ ४ ५ १ १ २ २ १
वाः । संवर । णेषुवक्रमूः । हरिक्रीडा । तमभ्य ।

१२ ३ ४ ५ २ १२ ३ १ १२ ३ २
नूषतस्तुभाः । अभिधेना । वःपय । सेत् । अष्टाऽयि

४ १२ १ २ २ १ २ ३ ४२
आपुयू६५६ः ॥(२) आ नःसोमा । संयतम् । पिप्युषी

५ २ १२ २ १ १२ ३ ४२ ५ १२
मिषाम् । इन्दोपवा । स्वपव । मानऊर्मि णा । या

१२ २ २२ १ २ ३ ४ ५ १२ २
नोदोहा । तेवि्र । चन्नसश्चुषायि । हाउहाउ ।

१ २ १२ २ १ २ ३२ ४
ऊप् । सुमदाजा । वन्मधु । मत् । सुवाऽरापूयाई५

६म्(३) ॥ १५ * ॥ [५]

२२ १ २२ २ ४ २
॥ अपामीवम् ॥ प्रोआ । यासोदिन्दुरिन्द्राऽस्याऽनि

१ ५ २ १ २ ४ २ ३ ५ २
ष्कृतम् । सखा । सख्युर्नप्रमिनाऽतीऽसङ्गिरम् । म

१ २ ४ १ ३ ५ २२ १ २
र्याः । इवयुवतिभाऽयिःसाऽमर्षति । सोमाः । कल

२ ३ २ ४ २ १ २ २
शेशतया । मनाऽपाऽथाई५३ ॥(१) प्रवो । धियोमन्द्र

* ऊ० गा० १३प्र० २ख० १५सा० ।

४ १२५ २१ १ ४२२५
युवोइवाइयिपन्युवः। पना। स्युवःसंवरणाइयिषूइवक्रमुः।
११ २र ४ १२५ ११ २र
चरायिम्। क्रीडन्तमभ्यनूइषाइतस्तुभः। अभायि। धे
र २२ ४ १र १ २र
नवःपयसेत्। अशाइयिश्राप्यूइपुइः॥(२) आनाः। सो
४ १र २५ ११ १ ४
मसंयतम्याइयिप्यूइषोमिषम् ः। पवस्वपवमाइना
१र २ ५र २र१ १र र ४ १२५
इऊर्मिणा। यानो। दोहते। त्रिरघाइनाइसश्चुषी।
२१ २र २२ ४
तुमात्। वाजवन्मधुमत्। सुवाइ यिरा ५ या ६ ५
६ म्(३)॥ १८ *॥[६] ७

अथ नकिरिति प्रगाथरूपे द्वितीयसूक्ते†—

प्रथमा।

२ ३१र २र २ २ ३ १ २ ३ १ १
नकिष्टङ्कर्मणानशद्यश्चकारसदावृधम्।
२ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १र ३र
इन्द्रन्नयज्ञैर्विश्वगूर्त्तमृभ्वसमधृष्टन्धृष्णुमोजसा॥ १ ‡॥

---

* ऊ० गा० २२प्र० २ख० १८गा०।

† 'उक्तो माध्यन्दिनः पवमानः। बृहत्पृष्ठं वामदेव्यं मैत्रावरुणं साम अभि-निधनं काण्वं ब्रह्मसाम वैश्वानसमच्छावाकसाम'—इति विं०।

‡ ऋ० आ० ३, २, १, १ (१भा० ५०२पृ०)=ऋ० वे० ६,५,८,३।

"तं" जनम् अन्यो मर्त्त्यो जनः "कर्म्मणा" हननादि-व्यापारेण "नकिः नशत्" नैव व्याप्नोति, "यः" "इन्द्रं चकार" इन्द्रमेवानुकूलं यज्ञैः साधनैश्चकार। कीदृश-मिन्द्रम्? "सदावृधं" सर्व्वदा वर्द्धकं, "विश्वगूर्त्तं" सर्व्वैस्तुत्यम्, "ऋभ्वसं" महान्तम् "ओजसा" स्वीयेन बलेन "अधृष्ट" शत्रुभिरनभिभूतम् "धृष्णुं" शत्रूणामभिभवनशीलम्॥

"धृष्णुमोजसा"—"धृष्णवोजसम्"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ १र २र ३ १र २र ३ १ २ ३ १ २
अषाढमुग्रम्पृतनासुसासहिंयस्मिन्महीरुरुज्रयः।

२ ३ २ ३ १ २ ३ २ ३ १ २
सन्धेनवोजायमानेअनोनवुर्द्यावक्षामीरनोनवुः॥ २ *॥८

"अषाढ़म्" असोढ़म् "उग्रम्" उद्गूर्णबलं "पृतनासु" शत्रुसेनासु "सासहिम्" अभिभवितारमिन्द्रं† स्तौमीत्यर्थः, "यस्मिन्" इन्द्रे "जायमाने" "महीः" महिम्न्यः "उरुज्रयः" बहु-वेगाः "धेनवः" हविरादिना प्रीणयित्र्यः अजा गाव एव वा‡ "समनोनवुः" समस्तुवन्। न केवलं धेनव एव अपि तु "द्यावः" द्युलोकाः "क्षामीः" पृथिव्यश्च ¶ समनोनवुः, तत्रत्याः सर्व्वे

* ऋ० वे० ६, ४, ८, ४।

† 'सासहिं—साधन-स्वभावम्'—इति वि०।

‡ 'धेनवः—गावः, आपः आदित्यरश्मयो वा'—इति वि०।

¶ 'क्षामीः—द्युलोकात् क्षेपणसमर्थाः आदित्य-रश्मयः'—इति वि०।

प्राणिनो नमन्त इत्यर्थः "त्रिहतो लोकाः"—इति श्रुतेः बहुवचनम् ॥

"चामीः"—"चामः"—इति पाठौ ॥ २ ॥ ८

५ १ ४ ५ ४र ५ २ १ २र
॥ वैखानसम् ॥ नकिष्टा३ङ्कर्मणानशात् । यश्चाका

१ १ ३र २ १ २ १र १ १ २ १ २
रा । सदावृधा२३म् । सदावृधाम् । इन्द्रान्नया । यो

५ २ १ १ १ २ १ २ १ १
विश्वगू । तमा२म्र्वसा२३म् । तमृम्वसाम् । अधाष्टे

१ १ २र २ १ २ ३र २ ५ १
न्धा । ष्णुमाजसा२३ । ष्णुमोजसा३४३ ॥(१) अधृष्टा३

४ ५ ४र ५ १ १ २ १ १ २र २ १ २ ३र
न्धृष्णुमोजसा । अधाष्टन्धा । ष्णुमोजसा२३ । ष्णुमो

२ १ २ १ २ १ २ २ ७ १
जसा । अषाढमू । अम्पृतना । सुसा२सहा२३यिम् ।

२ ३र २ १ २ १ १ १ २ १ १ २
सुसासहीम् । यस्मायिन्महायिः । उरुज्रया २ ३ः । उरु

२ ५ २ ४ र ५ ४ ५ २ १ २
ज्रया३४३ः ॥(२) यस्मिन्मा२हीरुरुज्रयाः । यस्मायिन्म

१ २ ३ १ १ २१ २ १ २ १
हायिः । उरुजया२३ः । उरुज्रयाः । सन्धायिनवो ।

२र १ २र १ ७ १ १ २र २ र १ २र १
जायमाने । अनो२नवू२३ः । अनोनवूः । द्यावाक्षामा

१ ३र १ १  २ ३र २  १
यिः। आनोनवूरइः। अनोन्वू३४३ः। ओ२३४५ई।
डा(३)॥८*॥[१]८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य
चतुर्थः खण्डः† ॥ ४ ॥

---

अथ पञ्चम-खण्डे‡, प्रथम-तृचे—

प्रथमा।

१ २ ३ १र २र ३ १ ३ १ २
सखायआनिषीदतपुनानायप्रगायत।
१ ३ २ ३ १र २र ३ १
शिशुन्नयज्ञैःपरिभूषतश्रिये ॥ १ ¶ ॥

हे "सखायः" सखीभूताः स्तोतार ऋत्विजः! "आ निषीदत" स्तोतुमुपविशत। अत्र "पुनानाय" पूयमानाय सोमाय "प्रगायत" प्रकर्षेण गायत तमभिष्टुत। ततः अभिष्टुतं सोमं "यज्ञैः" यजमानीयैः हविर्भिर्मिश्रणैश्च "श्रिये" शोभार्थं "परि भूषत" परितोऽलङ्कुरुत। तत्र दृष्टान्तः—"शिशुं न" यथा शिशुं बालं पुत्रं पितर आभरणैरलङ्कुर्व्वन्ति तद्वत्॥ १॥

---

* उ० गा० ४प्र० १ख० ८सा०।

† 'उन्नानि ब्रह्माणि'—इति वि०।

‡ 'इन्द्राग्नी मार्भवः पवमानः'—इति वि०।

¶ ऋ० श्रा० ६, २, ३, २ (२आ० २०६४०) = ऋ० वे० ७, ५, ७, १।

अथ द्वितीया ।

१ २ ३ २उ ३ १ २ ३ १ २ ३ १ २
समीवत्सन्नमातृभिःसृजतागयसाधनम् ।
३ २ १ २ ३ १र २र
देवाव्यांऽ३म्मदमभिद्विशवसम् ॥ २ * ॥

हे ऋत्विजः! "गय-साधनं" गृहस्य साधनभूतम्† "ईम्" एनं‡ सोमं "मातृभिः" मातृभूताभिः वसतीवरीभिः "संसृजत" सम्मिश्रयत, कथमिव? "वत्सन्न" यथा वत्सं मातृभिः गोभिः संयोजयन्ति तद्वत्। कीदृशम्? "देवाव्यं" देवानां रक्षकं "मदं" मदन-हेतुं "द्विशवसं" द्विगुण-वेगम् अतिशयित-बलं वा यद्वा द्वयोर्लोकयोस्तत्र स्थिता देवमनुष्या इत्यर्थः, तेषां हविर्द्दान-प्रदानेन प्रवर्द्धयितारं तं सोमम् "अभि" सं सृजत ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
पुनानादक्षसाधनंयथाशर्द्धायवीतये ।
१ २ ३ २ ३ १ २ ३ १ २
यथामित्रायवरुणायशन्तमम् ॥ ३ ¶ ॥ ९

* ऋ० वे० ७, ५, ७, २ ।

† "गयः"—इति निघण्टौ गृहनामसु आद्यं पदम् (३, ४)। विवरणकृता त्वेवं व्याख्यातम्—'गयः प्राणाः, देवानां प्राण-साधनार्थं मिश्रणं सोमस्य'—इति।

‡ "ईम्"—इति ऋग्वेदीय-पाठमवलम्ब्यैषा व्याख्या सामवेदीयपाठस्तु "ई"—इति

¶ ऋ० वे० ७, ५, ७, ३ ।

"दक्षसाधनं" बलस्य साधनं* धनानां हृद्देवी साधकं सोमं "पुनाता" पवित्रेण पुनीत [ पूञ् पवने ( उ० ) क्र्यादिः ; तस्माल्लोटि "तप्तनप्तनथनाश्च ( ७, १, ४५ )"—इति तस्य तबादेशः, पित्त्वादीत्वाभावः "शर्द्धाय" वेगार्थं† "वीतये" देवानां पानार्थं यथा भवति तथा "मित्राय" "वरुणाय" च "शन्तमम्" अतिशयेन सुखं यथा भवति तथा पुनीतेत्यर्थः ॥

"शन्तमं" "शन्तमः"—इति पाठौ ॥ ३ ॥ ९

॥ प्रवम‡ ॥ हाऽ। वो२हा। वो२हा३। हा। औ
२३४वा। हायि। साखायार२३४आ। नोषीदार२३४ता।
पूनानार२३४या। प्रार२३४गा। यार२३४ता। शायिशुन्ना
२३४या। ज्ञैःपारार२३४यिभू। षार२३४त। आर२३४यायि॥(१)
सामीवार२३४त्साम्। नामातॄ२३३भायिः। साञ्जातार२३
४गा। यार२३४सा। धार२३४नाम्। दायिवावार२३४
याम्। मादामार२३४भी। दार२३४यिशा॥(२) वार२३४

* 'दक्षसाधनं—शीघ्र-कर्म-कर्त्तारम्'—इति वि०।

† 'शर्द्धाय—बलाय'—इति वि०।

‡ "प्लवः"—इति ख० पु० पाठः।

५ २ ३ ५ २ ३ ५ २
साम्। पूनाता२३४दा। ह्वासाधा२३४नाम्। याथा

२ ५ ३ ५ ३ ५ २ ३
दा२३४र्ड्ढा। या२३४वी। ता२३४यायि। यथामा२३४

५ २ ३ ५ ३ ५ ३ ५
यित्रा। यावाहू२३४णा। या२३४ग्न। ता२३४माम्।

२ २ १ २ २ ५ २
ह्वा। वो३ह्वा। वो३ह्वा३। ह्वा। ओ२३४वा। ह्वा

५र र २ १ २ १ २र १र२र २ ११
३४। औहोवा। ए३। अतिविश्वानिदुरितातरेमा२३

११
४५(३) ॥ १२ * ॥ [१]

२ र र १ १र १
॥ सुज्ञानम् ॥ सखायआ। निषीदता। पुनाना

२ १ २ १ र १
या२। प्रगायता। शिशुन्नाया२। ज्ञैः प। रा२यि

३ ५र र १ २ २ र
भू२३४औहोवा। षतश्रियए३ ॥(२) समीवत्साम्। न

र १ २ र र १ २र र १
मातृभायि। सृजतागा२। यसाधनाम्। देवावाया२

१ ३ ५र र १ २
म्। मदम्। आ२भा२३४औहोवा। द्विशवसमे३ ॥(१)

२र र र १ २र १ र १
पुनातादा। ससाधनाम्। यथाशार्द्धा२। यवीतया

* ऊ० गा० ४प्र० १ख० १२सा०।

२ र १ १ ३ ५र र १
यि। यथामायित्रा२। यव। हुरणा२३४औहोवा। य

२ १ ११११
शन्तममे३उपा२३४५(३) ॥ १८* ॥ [२]

३ २ ३ १ ५र
॥ दैवोदासम् ॥ सखा३१। यञ्जा३१२३४। निषी।

२ २ १ २ ३र २ ५र २ २
दा३ता। पुना३१। नाया३१२३४। प्रगा। या३ता।

३ १ ३ २ र २ २ २ ३ २
शिशू३१म्। नया३१२३४। ज्ञैःप। रा३यिभूं। षता

३ १ १ ५ २ १ ३ २
३१। श्रिया३। औ२३४वा॥(१) समी३१। वत्सा३१२

५र १ २ ३ २ ५र
४म्। नमा। तूर्३भायिः। स्वजा३१२३४। यसा।

२ २ ३र २ ३ २ ५ २
सा३नाम्। देवा३१। विया३१२३४म्। मदम्। आ

२ ३ २ ३ २ १ ५
३भायि। हिशा ३ १। वसा३म्। औ२३४वा ॥(२)

३ २ ३र २ ५र २ २ ३ २
पुना३१। तादा३१२३४। चसा। धा३नाम्। यथा

३ २ ५र २ २ ३ २ ३ २
३१मर्त्रा३१२३४। यवी। ता३याथि। यथा३। मित्रा

* ऊ० गा० ७प्र० १ख० १८सा०।

५ २ २ १ ० १ २ १

३१२३४। यव। ह्व२णा। यशा३१। तमा३म्। औ

५ ३ ५

२३४वा। ऊ२३४पा(३) ॥ १८ * ॥ [३]

२ १र २ ४ ५ १ २ ५

॥ पौष्कलम् ॥ सखाया३आनि। षीदा२ ३ ४ता।

२१ २र १ २ १ ५ २ १ ० र

पुनानाया। प्रागायार३४ता। शिशूत्रया। यज्ञैःपार

२ २ १ २ १ १ १ १ २१र१ ४ ५

रा२३४५यिभू६५६। षतश्रिये२३४५ ॥(१) समीवा३त्सन्न।

२ ३ ५ २ १ २र १ २ ३ ५

मातृ२३४भायिः। ह्व जातागा। यासाधा २ ३ ४नाम्।

२र १ ० ३ २ १ ३ १

देवावियाम्। मदार्माा२३४५मा६५६यि। द्विशवसार

१ १ १ २ १र २ २ ५ २ ३ ५ २ १

३४५म् ॥(२) पुनाता२दत्त। साधा२३४नाम्। यथा

२ १ २ ३ ५ २ १ ० ३

शर्द्दो। पावीता२३४याथि। यथामित्रा। यवा२ह्व२२

२ १ ३ १ १ १ १

४५णा६५६। यशन्तमा२३४५म्(३) ॥ १८ † ॥ [४]

५ र २ २ ३ ५ २ १

॥ मौक्षम् ॥ सखा। यश्चाऔ२३४वा। निषायि।

---

* ऊ० गा० ७प्र० १अ० १८सा०।

† ऊ० गा० ६प्र० १अ० १८सा०।

२ १ ५ २ र १र २ १ १ १ १ १
दाताओ२३४वा । पुनानायप्रगा२यता२३४५ । शायि

२ १ ५ १ र २ १ १ १ १ १ १ २ १
यिशाओ२३४वा । नयज्ञैःपरिभू२३४५ । षाताओ२३४

५ २ ५ र ३ १ १ ५ २ १
वा । श्रिये१ ॥(१) समौ । वत्साओ२३४वा । नमा ।

२ १ ५ २ १र २ १र २ १ १ १ १ १ २
नृभाओ२३४वा । वृजतागयसाधना२३४५म् । दायिवा

३ ५ १ ३ २ २ १ ५
ओ२३४वा । वियम्मदमभा१यि । दायिशाओ२३४वा ।

२ ५ र ३र २ ३ ५ ५ १ २
वसा१म् ॥(२) पुना । तादाओ२३४वा । त्तसा । धाना ।

३ ५ १ २र १ र २ र १ ३ १ १ १ १ १ २ ३
ओ२३४वा । यथाशर्द्धायवीतया२३४५यि । याथाओ२३

५ २ १र २ १ १ १ १ १ १ १ २ ३ ५ २
४वा । मित्रायवरुणा२३४५ । याशाओ२३४वा । तमा

१म्(३) ॥ १५ ॥ [५] ९

अथ प्रवाजीति तृचात्मकं द्वैपदं द्वितीयं सूक्तं—

तत्र प्रथमा ।

१ ३क २र ३ १ २ ३ २ ३ १ ३ २उ ३ १ २
प्रवाज्यक्षाःसहस्रधारस्तिरःपवित्रंविवारमव्यम् ॥ १ † ॥

* ऊ० गा० १४प्र० २ख० १५सा० ।

† ऋ० वे० ७,५,११,५ ।

"वाजी" बलवान् वेगवान् वा "सहस्रधारः" बहुधारायुक्तः सोमः "अव्यम्" अविभवं "वारं" वालं पवित्रं "तिरः" व्यवधायकं कुर्व्वन् "प्राचाः" विविधं प्रचरति [चरतेर्लुङि रूपम्] ॥

"प्रवाजी"-"प्रसुवानः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २क २र ३ १ २ ३ १ २ ३ १र २र ३ २
सवाज्यचाःसहस्ररेताअद्भिर्मृजानोगोभिःश्रीणानः ॥२*॥

"सः" सोमः "अचाः" चरति । कोदृशः ? "सहस्ररेतः" बहु-रेतस्कः "बहूदकः" "अद्भिः" वसतीवरीभिः "मृजानः" मृज्यमानः "गोभिः" गाविकारैः चीरादिभिः "श्रीणानः" श्रियमाणः ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ १र २र ३ १र २र ३ २
प्रसोमयाहीन्द्रस्यकुक्षानृभिर्येमाणोअद्रिभिःसुतः ॥३†॥१०

हे "सोम !" "नृभिः" ऋत्विग्भिः "येमानः" नियम्यमानः‡ "अद्रिभिः" ग्रावभिः "सुतः" अभिषुतः "इन्द्रस्य" "कुक्षा" [सप्तम्या डादेशः (२, ४, ३८)] कुक्षौ उदरभूते कलशे वा "प्रयाहि" प्रकर्षेण गच्छ [संहितायां येमान इत्यत्र णत्वम्] ॥ ३ ॥ १०

---

* ऋ० वे० ७, ५, २१, ६ ।

† ऋ० वे० ७, ५, २१, ७ ।

‡ 'येमानः—मृज्यमानः'—इति वि० ।

१ २र १ २ १   १ १ र २
॥ सौहविषम् ॥ प्रवाजियचाः। सहस्रधारास्तार१यि

५ २ १ २ १र ५
रा२३४ः। हायि। पवित्राम्। विवारार२३४ऽहायि।

२ ४ ५ १ २र १ २ १ २ १ र ०
आर२३४व्योई६हायि ॥(१) सवाजियश्चाः। सहस्ररेताश्च

५ २ १र २र १
द्धार२३४यिः। हायि। मृजानाः। गोभायिश्चा२३४यि

५ १ ५ ५ १र २ २ १
हायि। णा२३४नोई६हायि ॥(२) प्रसोमयाचो। इन्द्र

० ५ २र १र २ १
स्यकुचानृभार२३४यिः। हायि। येमानाः। अद्रिभार

५ १ ५ ५
३४। यिचायि। सू२३४तोई६हायि(३) ॥ १५ * ॥ [१]

२ र १ २ १ २ १
॥ जराबोधीयम् ॥ प्रवाजियोवा। चाः। सहार

२ र १ २ ४ ५
३स्रा। धारस्तायिराः। पवाथित्रा१वार३यिवा। रम्।

२ २ २ र १ २ १ २ १
अव्यो३४५ई। डा। सवाजियोवा। चाः। सहार

२ र र १ २ ४ ऽ ५र
३स्रा। रेताअद्रायिः। मृजाना१गोर३भायिः। श्री।

१र १ २ र १ २ १ २ १
णानो३४५ई। डा। प्रसोमयोवा। हायि। इन्द्रास्या

---

* ज० गा० ४प्र० १ख० १५सा०।

२ र १ र २ ४ऽ ५
२३कू । स्वानुभायिः । येमानो१आर२३द्रायि । भिः ।

३ २
सुतो३४५ई । डा(३) ॥ १ * ॥ [२] १०

अथ येसोमा इति तृचात्मकं तृतीयं सूक्तम्, †

तत्र प्रथमा ।

१र २र ३ २ ३१ २ ३ १ २ ३ २
येसोमासःपरावतियेअर्वावतिसुन्विरे ।

२ ३ १ २ ३ १ २
येवादःशर्य्यणावति ॥ १ ‡ ॥

एतदादिभ्यामृग्भ्यामिन्द्रार्थं सर्वत्र सोमाभिषवोऽस्तीत्याह— "ये" "सोमासः" "परावति" विप्रकृष्टेऽतिदूरे¶ देशे "ये" वा "अर्वावति" अन्तिके देशे§ "सुन्विरे" अभिषूयन्ते "ये वा" "शर्य्यणावति"‖ [कुरुक्षेत्रस्य जघनार्द्धे शर्यणावत्संज्ञकं मधुर-रस-युक्तं सोमवत् सरोऽस्ति] "अदः" अस्मिन् सरसि सुरसा ये सोमा इन्द्रायाभिषूयन्ते । ते अस्माकमभिमत-फलं ददात्विति वक्ष्यमाणेन सम्बन्धः ॥ १ ॥

---

* ऊ० गा० २३प्र० ३ख० १सा० ।

† 'यज्ञायज्ञीयमग्निष्टोमसाम'—इति ।

‡ ऋ० वे० ७, २, ५, १ ।

¶ "परावतः"—इति निघण्टौ दूर-नामसु पञ्चमं पदम् ( ३, २६ ) ।

§ "अर्वाके"—इति निघण्टावन्तिक-नामसु षष्ठं पदम् ( २, १६ ) ।

‖ 'शर्यणावति—भूमौ'—इति वि० ।

अथ द्वितीया।

१ २ ३ २ ३१ २ ३१र २१ क २ २र
यआर्जीकेषुकृत्वसुयेमध्येपस्त्यानाम्।

२ ३ १२ ३ १ २
येवाजनेषुपञ्चसु॥ २ *॥

"ये" वा सोमाः "आर्जीकेषु" ऋजीकानामदूरभवाः आर्जीकादेशास्तेषु† तथा "कृत्वसु" कृत्वानइति देशाभिधानम्, तेषु‡ कर्मवत्सु देशेषु च; किञ्च "पस्त्यानां" सरस्वत्यादीनां नदीनां¶ "मध्ये" समीपे च ये सोमा अभिषूयन्ते [ "ऋषयो वै सरस्वत्यां सत्रमासतेत्यादिषु§ नदीतीरे यज्ञकरणस्य श्रवणात्; किञ्च "जनेषु पञ्चसु" निषाद-पञ्चमाश्चत्वारो वर्णा पञ्चजनास्तेषु‖ च "ये वा" सोमा अभिषुताः। ते सोमा अस्माकमभिमत-फलं ददात्वित्युत्तरेण सम्बन्धः॥ २॥

---

* ऋ० वे० ७, २, ५, ३।

† 'आर्जीकेषु—ऋजुषु'—इति वि०।

‡ 'कृत्वसु—कृतेषु स्थानेषु'—इति वि०।

¶ 'पस्त्यानां—गृहाणाम्'—इति वि०। "पस्त्यम्—इति निघण्टौ गृह-नामसु षष्ठं पदम् (३, ४,)।

§ "ऋषयो वै सरस्वत्यां सत्रमासत। ते कवषमैलूषं सोमादनयन् दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्ये दीक्षिष्टेति। तं बहिर्धन्वोदवहन्नत्रैनं पिपासा हन्तु सरस्वत्या उदकं मा पादिति"--इति ऐत० ब्रा०।

‖ जनेषु पञ्चसु—'पञ्चजनाः, यजमानश्चत्वारश्चर्त्विजः'—इति वि०।

अथ तृतीया ।

१ २ ३ २ ३ १र ३ १ २ ३ २ ३ १ २
तेनोवृष्टिन्दिवस्परिपवन्तामासुवीर्यम् ।

३ २ ३ २ ३ १ २
स्वानादेवासइन्दवः ॥ ३ * ॥ ११

"स्वानाः" सुवानाः तत्र चात्र अभिषूयमाणा "देवासः" देवाः दीपन-शीलाः स्तुत्या वा "इन्दवः" "ग्रहेषु" चमसेषु चरन्तः, "ते" सोमाः "नः" अस्माकं "दिवस्परि" परि-शब्दः पञ्चमी-द्योतकः, अन्तरिक्षाद्दादित्याद्वा "वृष्टिम्" [ "अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते । आदित्याज्जायते वृष्टिः ( म० १अ० )"—इति वृष्टि-कारणत्वात् ] किञ्च "सुवीर्यम्" शोभन-वीर्योपेतम् पुत्रञ्च धनादिकं वा "आ पवन्ताम्" प्रापयन्तु । यजमानः सोमेनाभिमत-फलानि प्राप्नोति खलु ॥

"स्वानाः"-"सुवानाः"—इति पाठौ ॥ ३ ॥ ११

२र र र १ २ १ र ३ १
॥ जरावोधीयम् ॥ येसोमासोवा । परावताायि ।

२र १ २ १ र २ ४
येआर्वा२३वा । तिसुन्वायिरायि । येवादा१ःशा२३र्य्यां ।

५र ३ २ २र र १ २ १ ११
णा । वतो३४५ई । डा ॥(१) यआर्ज्जीकोवा । सूक्त्वसू ।

२र १ २ १ र २ ४
येमाध्या२३यिपा । स्तियानाम् । येवाजा१ना२३यिषू ।

* ऋ० ९०७, २, ५, ४ ।

५　 ३ १　　　　　 ११ ८ १　 १　　 १　　 ११
प । चसो ३४५ई । तेनोवृष्टोवा । दायिवस्वराथि ।
१　　　 २　　 ८ १　　　 ८　 २　　　　 ४
पवान्ता२३मा । सुवीरायाम् । स्वानादा१यिवा२३साः ।
५　 १ २
हु । दवो३४५ई । डा(३) ॥ १६ * ॥ [१ ११

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य
पञ्चमः खण्डः ॥ ५ ॥

---

अथ षष्ठे खण्डे—

आतेवत्सइति त्र्यचात्मकं प्रथमं सूक्तम्,—

तत्र प्रथमा ।

१　 १३ १८　 १८　　 ३ १　 १　 ११ २
आतेवत्सोमनोयमत्परमाच्चित्सधस्थात् ।
१ ३　 १　 २　　 ३ २
अग्नेत्वाङ्कामयेगिरा ॥ १ † ॥

हे "अग्ने!" "वत्सः" ऋषिः "ते" तव "मनः" "परमाच्चित्" उत्कृष्टादपि "सधस्थात्" द्युलोकात् "आ यमत्" आयमन्ति आगमयन्ति । केन साधनेन? "त्वां" "कामये"

---

* ऊ० गा० ४प्र० १ख० १६गा० ।

† उ० आ० १, १, १, ८ (१भा० १०४पृ०)=ऋ० वे० १९, ११५=ऋ० वे० ५, ८, ११, १ ।

कामया अभिलषन्त्या "गिरा" स्तुत्या [ "कामये"—इत्यत्रापि मे आदेशः पूर्ववत् । यद्वा त्वां कामये अभिलषामि] ॥

"कामये"-"कामया"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २उ ३१२क २ ३ २ ३ १ २ ३ १ २
पुरुत्राहिसदृङ्ङसिदिशोविश्वाअनुप्रभुः ।

३ १ २
समत्सुत्वाहवामहे ॥ २ * ॥

हे अग्ने ! "पुरुत्रा हि" बहुषु हि देशेषु त्वं "सदृङ् असि" समान-द्रष्टा भवसि अतएव "विश्वाः" सर्वा दिश "अनु" लक्ष्य "प्रभुः" ईश्वरो भवसि । ईदृशं "त्वा" त्वां "समत्सु" सङ्ग्रामेषु रक्षणार्थं "हवामहे" आह्वयामहे ॥

"दिशः"-"विदिशः"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

३ २ ३ १र २र ३ १ २
समत्स्वग्निमवसेवाजयन्तोहवामहे ।

१ २ ३ १ २
वाजेषुचित्रराधसम् ॥ ३ † ॥ १२

"समत्सु" समदेषु सङ्ग्रामेषु "वाजयन्तः" बलमिच्छन्तो वयम् "अवसे" रक्षणार्थम् "अग्निं हवामहे"। कीदृशम् ? "वाजेषु" सङ्ग्रामेषु "चित्रराधसम्" याचनीय-धनम् ॥ ३ ॥१२

---

* ऋ० वे० ५, ८, ३६, ३ ।

† ऋ० वे० ५, ८, ३६, ४ ।

५र २    १ र १    १ २र
॥ वात्सम् ॥ आतेवत्साः । मनोयमत् । परमात् ।
१ २ १ २ २ ४ ५ ५
चित्सधार२३स्थात् । अग्नायित्वा२३ङ्का३ । मयोवा । गा
५ २ र १ २ १ र
५यिरोई्हायि ॥(१) पुरुत्वाहो । सहङ्कसि । दिश्वो
२ र १ २ १ २ २ ४ ५
विश्वाः । अनुप्रा२३भूः । समात्सू३त्वा३ । हवोवा ।
४ ५ २ १ २ र १र २
मा५होई्हायि ॥(२) समत्मुवा । ग्निमवसे । वाजयन्तः
र २ १र २ २ ४ ५ ४
हवामा२३हायि । वाजायिषू३चा३यि । चरोवा । धा
५
५सोई्हायि(३) ॥ १७ * ॥ [१] १२

अथ द्वितीय-तृचे—

प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ १ २
त्वमिन्द्राभरओजोनृम्णंशतक्रतोविचर्षणे ।
२ ३ १ २ ३ १ २
आवीरम्पृतनासहम् ॥ १ † ॥

---

* ऊ० गा० ४प्र० १ख० १७गा० ।

† ऊ० आ० ५, १, २, ७ ( १भा० ८२४पृ० ) = ऋ० वे० ४, २, १०, १ ।

हे "शतक्रतो" बहुकर्मन् ! "विचर्षणे" विद्रष्टः इन्द्र ! त्वं "नः" अस्मभ्यम् "ओजः" बलं "नृम्णं" धनं च "आ भर" आहर । "वीरं" वीर्योपेतम् "पृतनासहं" सेनानामभिभवितारं त्वाम् "आ" याचामह इति शेषः ॥

"आभरओजः"-"आरुतामोजः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१र २र ३१ २३ २३ १ २ ३ १ २
त्वꣳहिनःपितावसोत्वम्माताशतक्रतोबभूविथ ।
१ २ ३ १ २
अथातेसुम्नमीमहे ॥ २ * ॥

हे "वसो" वासयितः ! "शतक्रतो" बहुकर्मन्निन्द्र ! त्वं "नः" अस्माकं "पिता" पितृवत् पालको "बभूविथ" भव "त्वं" "माता" मातृवद्धारकश्च बभूविथ । अथ च वयं "ते" तव स्वभूतं "सुम्नं" सुखम् "ईमहे" याचामहे ॥ २ ॥

अथ तृतीया ।

१ २ ३ २३ १ २
त्वाꣳशुष्मिन्पुरुहूतवाजयन्तमुपब्रुवेसहस्कृत ।
१ २ ३ १ २
सनोरास्वसुवीर्यम् ॥ ३ † ॥ १२

---

* ऋ॰ वे॰ ४, ३, १०, २ ।

† ऋ॰ वे॰ ४, ३, १०, ३ ।

[ सहसा बलेन स्तोतृभिर्युक्तः क्रतः सहस्कृतः ] हे "सहस्कृत" इन्द्र ! [स्तुत्या हि देवताया बलं वर्द्धते, तस्य सम्बोधनम्] —"शुष्मिन्" अतएव बलवन् ! "पुरुहूत" पुरुभिर्बहुभिर्यजमानै राहुतेन्द्र ! "वाजयन्तं" बलमिच्छयन्तं त्वाम "उपब्रुवे" उप स्तौमि। "सः" त्वं "नः" अस्मभ्यं सुवीर्यं धनं "रास्व" देहि॥

"सहस्कृत"-"शतक्रतो"—इति पाठौ ॥ ३ ॥ १३

५ २ ४ ५र १र र
॥ औपगवाद्यम् ॥ तुवन्नाऽइन्द्रआभरा। ओजोनृ

र २र २
म्णाꣳशतक्रतोविचर्षणायि। आवौ२। दौ२। ऊवा

२ ५ २र १ २ ५ २ ४
२३यि। रा३४पा। जनासाहाम् ॥(१) तुवꣳहा३यिन्नः

५र १ र र र र २
पितावसाउ। त्वम्माताशतक्रतोबभूविथा। अयौ२।

१ २ ५ २ र १ २
हौ२। ऊवा२३यि। ता३४यिसू। म्नमीमाहायि ॥(२)

५ र १ ४ ५ र १र र २
तुवाꣳशूश्मिन्पुरुहूता। वाजयन्तमुपब्रुवेसहस्कृता। स

१ २ ५ २ र १ २
नौ२। हौ२। ऊवा२३यि। रा३४स्वा। सुवीरायाम्।

र १ २ १र र २ १ २ १
ऐ। वा२ए३। हिया३४औहोवा। ए३। उपा२३१२

१११
३४५(३) ॥ १८ * ॥ [१] १३

* ऊ० गा० ४प्र० १ख० १८गा०।

अथ तृतीय-तृचे—

प्रथमा ॥

१ २ ३ १ २ ३ १ २
यदिन्द्र चित्रमइह नास्ति त्वादातमद्रिवः।

२ ३ १ २ ३ १ २
राधस्तन्नो विदद्वस उभया हस्त्या भर ॥ १ * ॥

हे "अद्रिवः" वज्रवन्! "चित्र" चायनीयेन्द्र! "त्वादातं त्वया दातव्यं यद्धनं "मे" मम "इह" अस्मिंल्लोके "नास्ति", हे "विदद्वसो" लब्धधनेन्द्र! "नः" अस्मभ्यम् "उभया हस्तौ" उभाभ्यां हस्ताभ्यां तद् "राधः" "आभर" आहर ॥

"मइह"-"मेहना"—इति छन्दोगानां बह्वृचानां पाठौ ॥१॥

अथ द्वितीया।

१र २र ३ १ २ ३ १ २ ३१र २र
यन्मन्यसे वरेण्यमिन्द्र द्युक्षं तदाभर।

३ १ ३ १ २ ३१र २र ३ १ २
विद्याम तस्य ते वयमकूपारस्य दावनः ॥ २ † ॥

हे इन्द्र! "यत्" "द्युक्षम" अन्नं "वरेण्यं" वरणीयं "मन्यसे" "तत्" द्युक्षम् "आभर" अस्मभ्यम्। "ते" तव सम्बन्धिनी "वयं"

---

* ऋ० आ० ४, २, १, ४ (१आ० ७०४ऋ०) = आ० वे० ४, २, १०, १।

† आ० वे० ४, २, १०, २।

"तस्य" तादृशस्योक्तलक्षणस्य "अकूपारस्य" [ अकुत्सितः पारो अन्तो यस्य तादृशस्यान्नस्य "दावनः" दानस्य "विद्याम" स्याम ॥

"दावनः"-"दावने"—इति पाठौ ॥

अथ तृतीया ।

१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ २
यत्तेदित्सुप्रराध्यम्मनोअस्तिश्रुतम्बृहत् ।

१ २ ३ १ १ २ ३ १२ १२ ३ १ १
तेनदृढाचिदद्रिवआवाजन्दर्षिसातये ॥ ३* ॥ १४

॥ इति चतुर्थः प्रपाठकः ॥

हे इन्द्र ! "ते" तव "दित्सु" "प्रराध्य" प्रकर्षेण स्तुत्यं "श्रुतं" "बृहत्" महत् यत् "मनः" "अस्ति", "तेन" मनसा हे "अद्रिवः" वज्रवन्निन्द्र ! "दृढाचित्" दृढमपि "वाजम्" अन्नम् "आ दर्षि" आदारयसि, "सातये" अस्मत्सम्भजनाय लाभाय वा ॥

"दित्सु"-"दित्सु"—इति पाठौ ॥ ३ ॥ १४

३ ४ ५ ३ २ ४ ५
॥ वौङ्कम् ॥ यदिद्रचित्तमइ । हना३ । आस्ती ।

१र र र २ १ १
त्वादातमद्रिवः । राधस्ता२३न्नाः । वौवो२ । ददसा

२ १ १ २
उ । उभया२३हा । स्तााया२३ । भा२३रा३४३ ॥(१)

* ऋ० वे० ४, २, १०, ३ ।

२ ४ ५र र ३ २ ४ ५ १ र
यन्मन्यसेवरे। णियाउम्। आयिन्द्रा। द्युचन्तदाभ

र २ १ १र र
र। विद्यामा२३ता। स्यास्या२। तेवयाम्। अकूपा

२ १ १ १ ३ ४र ५
२३रा। स्यादा२३। वा२३ना३४३:॥(२) यत्तेदित्सुप्र

र ३ २ ४ ५ १ र
रा। धियाउम्। मामाः। अस्तिश्रुतम्बृहत्। तेनदा

२ १ १ र र २
२३र्ढा। चायिवा२यित्। अद्रिवाः। आवाजा२३रा।

२ १ २ १
षायिसा २ ३। ता २ ३ या ३४ ३ यि। ओ२३४ ५ ई।

डा(३) ॥ १८* ॥ [१]

२ १ ४ ५ ४
॥ वसिष्ठप्रियम् ॥ यदिन्द्रा२३। चित्रमहृच। ना

५ २र ३र १ ७ र १ २ १
स्तौ। त्वादा३तामद्रायिवो२। राधास्तन्नो३। विदा

३ ५ १ २ ३ ५ १ २ ३ ५
२द्वा२३४साउ। ऊभाओ२३४वा। याद्दाओ२३४वा।

५ २ १ ४र ५र ४ ५
स्तियापुभरा॥(१) यन्मन्या२३। सेवरेणिम्। आयिन्द्रा।

२ १ २ १ २ १ ३
द्युक्षा३न्तादा१भारा२। विद्यामता३। स्यतार्यिवा२३

---

* ऊ० गा० ४प्र० १अ० १८सा०।

५ १ १ १ ५ १ २ ३ ५ ४
४याम् । आकाओ२३४वा । पाराओ२३४वा । स्पद्रा

२ १र ४ ५र ४ ५
५नाः ॥(२) यत्तेदो२३ । तुप्रराधियम् । मानाः ।

२ १ ० र १ १ १ १
अस्तीश्भूतम्वृत्रा२त् । तेनाहढा३ । चिद्रा२द्रा२३४यि

५ १ १ ३ ५ १ २ ३ ५ ४
वाः । आवाओ२३४वा । जान्दाओ२३४वा । षिसा५त

याषि । हो५ई । डा(३) ॥ १८ * ॥ [२] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य

षष्ठः खण्डः † ॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ८ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-
बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण
विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे अष्टमोऽध्यायः ‡ ॥ ८ ॥

---

* ऊ० गा० १३प्र० २खं० १८सा० ।

† 'चमाप्तश्चैतत्ग्रन्थसमयः'—इति वि० ।

‡ चतुर्थः प्रपाठकः परिसमाप्तः'—इति वि० मूलपुस्तकादिष्वप्ययमेवेतिश्रम् ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ९ ॥

॥ अथ नवमोऽध्याय आरभ्यते * ॥

तत्र,

शिशुञ्जज्ञानमिति प्रथम-खण्डे† ऋचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २
शिशुञ्जज्ञानꣳहर्यतम्मृजन्ति

३ २ ३ १२ ३ १ २ ३ १ २
शुम्भन्तिविप्रम्मरुतोगणेन ।

३ २ ३ १र २ ३ १र
कविर्गीर्भिष्काव्येन‡कविःसंसत्

२र ३ १ ३ १ २ ३ १ २
सोमःपवित्रमत्येतिरेभन् ॥ १ ¶ ॥

"शिशुम्" इदानीमुत्पन्नत्वाच्छिशुवच्छिशुन्तम्§ [यद्वा, पापान्वित मकुर्व्वन्तं विनाशयन्तम्] "जज्ञानम्" प्रादुर्भूतम्‖ अतएव

---

* 'इदानीमष्टममध्यायस्य बारिंश अुच्यते'—इति वि० ।

† "गायत्र-प्रभृति-साम्नां ब्राह्मणेनार्षेयमुक्तम्'—इति वि० ।

‡ "गोभिः काव्येन"—इति विषमसमपाठः ख० मु० पु० ।

¶ ऋ० वे० ७, ४, ९, १ ।

§ 'शिशु'—शंसनीयम्'—इति वि० ।

‖ 'जज्ञानं—जायमानम्'—इति वि० ।

"हर्य्यतं" [ हर्य्य गतिकान्त्योः ( भ्वा० प० ) ] । भृमृदृशी-त्यादिना अतच् । सर्वैः काम्यमानं सोमं "मृजन्ति" मरुतः* शोधयन्ति किञ्च "विप्र" मेधाविनं सोमं "गणे न" आत्मीयेन† सप्तसङ्ख्याकेन "शुम्भन्ति" अलङ्कुर्वन्ति‡ । ततः "कविः" क्रान्त-प्रज्ञः सोमः "काव्येन" कवि-कर्म्मणैव "कविः" शब्दयितव्यः सन् शब्दायमानः "गीर्भिः" स्तुतिभिः सह "पवित्रम्" "अत्येति" अतीत्य गच्छति ॥

"विप्रम्"—इति छन्दोगाः,"वह्निम्"—इति बह्वृचाः पठन्ति॥१॥

अथ द्वितीया ।

१ २　३ १ २　३ २　३ २
ऋषिमनायऋषिकृत्स्वर्षाः

३ १ २　३ १ २　३ २
सहस्रनीथःपदवीःकवीनाम् ¶ ।

३ २ ३ १　२　३ १र　२र ३
तृतीयन्धाममहिषस्सिषास

१　२　३　२ ३ १ २　३ २
न्त्सोमोविराजमनुराजतिष्टुप् ॥ २ § ॥

"ऋषिमनाः" सर्वदर्शनशीलमनस्कः, अतएव "ऋषिकृत्" सर्वस्य दर्शनकर्त्ता प्रकाशनस्य कर्त्ता "स्वर्षाः" सर्वस्य सूर्य्यस्य वा

* 'मरुतः—आदित्यरश्मयः'—इति वि० ।

† 'गणेन—समानेन'—इति वि० ।

‡ 'शुम्भन्ति—पावयन्ति'—इति वि० ।

¶ "पदवीः कवीनाम्"—इति विसर्गमध्यपाठः ऋ० मु० पाठः ।

§ ऋ० वे० ७, ४, ८, २ ।

सम्भक्ता: "सहस्रनीथ:" [ नीथा स्तुति: ] बहुविध-स्तुतिकः "कवीनां" क्रान्त-प्रज्ञानां मध्ये "पदवी:" स्खलितानां पदानां साधुत्वेन संयोजयिता य: सोमो विद्यते स "महिषः" महान् पूज्यो वा सोम: "तृतीयं धाम" द्युलोकं "सिषासन्" सम्भक्तुमिच्छन् "स्तुप्" स्तूयमान: सन् "विराजं" विशेषेण राजन्तं दीप्यमान मिन्द्रम् "अनुराजति" प्रकाशयति ॥ २ ॥

अथ तृतीया।

३ २३ १ २३२ ३१२
चमूषच्छ्येनःशकुनोविभृत्वा
३२ ३१र २र ३१२
गोविन्दुर्द्रप्सआयुधानिबिभ्रत्।
३२ ३१र २र ३२
अपामूर्मिंᳲसचमानःसमुद्रं
३ २ ३१ २ ३१ २
न्तुरीयन्धाममहिषोविवक्ति ॥ ३ * ॥ १

"चमूषत्" चमन्ति भक्षयन्त्यत्रेति चम्वश्चमसास्तेषु सीदन्† यद्वा, चम्वौ अधिषवणफलके तयोर्वर्त्तमान: "श्येन:" शंसनीय: "शकुन:" शक्त: सामर्थ्यकारी "विभृत्वा" [ हरतेरातोमनिनित्यादिना (३, २, ७४) क्वनिप् ] पात्रेषु विहरणशील:

* ऋ० वे० ७, ४, ८, ४।

† 'चमूषत्—* * *। अथवा चमूम् सेनासु सीदति'—इति वि०।

"गोविन्दुः" यजमानानां गवां लम्भकः* [विन्दुरिच्छुरिति उ-प्रत्ययान्तत्वेन निपातितः] "द्रप्सः" धारयन्† "अपाम्" उदकानाम् "ऊर्मिं" प्रेरकं "समुद्रम्" [अन्तरिक्षनामैतत् (निघ० १, ३)] अन्तरिक्षं "सचमानः" सेवमानः "महिषः" महान् य एवं विधः सोमः स "तुरीयं" चतुर्थं धाम चान्द्रमसं स्थानं‡ "विवक्ति" सेवते सूर्य्यलोकस्योपरि चन्द्रमलोको विद्यत इति यमः पृथिव्या अधिपतिः समावत्वित्यादिभिश्चन्द्रमानक्षत्राणामधिपतिः सद्यमत्ववैचित्यन्तैर्मन्त्रैर्ज्ञायते ॥ ३ ॥ १

२ २ २ १ २
॥ पार्थम् ॥ ओ३हो३होयि। शिशुञ्जज्ञा। ना३उ
१ २ ३ ४ ५ २ १ २ १ २
हर्य्यं। तम्मृजन्तायि। शुम्भन्तिवायि। प्रा३मरु। तो
२ ४ ५ २ १र २ १ र २ ३ ४ ५
गणेना। कविगीर्भायिः। का३विये। नाकविस्सान्।
२र १ २ १ २ २ ४
सोमःपवायि। ता३मति। आ३४३यि। ती३रापुयि
२ १ २ १ २ ३ ४५
भा६५६न् ॥(१) ऋषिमनाः। या३ऋषि। कृत्स्वर्षाः।
२ १ २ १ २ ३ ४ ५ २ र १
सहस्रनायि। था३ःपद। वीःकवीनाम्। तृतीयन्धा।

---

* 'गोविन्दः—गावः उदकं वाक् पृथिवी आदित्यरश्मयो वा। एतानि यो विन्दति स गोवित्। विदज्ञाने विदलाभे विदसत्तायाम्'—इति वि०।

† 'द्रप्सः—उदकसम्मिश्रः'—इति वि०।

‡ 'तुरीयं धाम— * * * द्रोणकलशम्'—इति वि०।

२ १ २ ३ ४ ५ २र १र १ २ १
माउ३महि। षःसिषासान्। सोमोबिरा। जा३मनु।
२ २ ४ २ र१ २
रा३४३। जा३ताप्यिष्टेई५ई ॥(२) चिमूषच्छायि। ना
१ २ ३ ४ ५ २र १ २ १र
३:श्नकु। नोविभृत्वा। गोविन्दुद्रा। प्सा३आयु।
२र३ ४ ५ २ १र १र २ १ र २ ३ ४ ५
धानिविभ्रात्। अपामूर्मीयिम्। सचमा। नःसमुद्रा
१ र १ र१ २ २
म्। ओ३हो३होयि। तुरीयन्धा। मा३महि। षो३
२ ४
४३। वा३यिवा५त्ता३ई५ईयि(३) ॥ १२ * ॥ [१]

३ ४ २
॥ महावामदेव्यम् ॥ श्ना५यिश्नुम्। यज्ञा३ना३उ
४ ५ १ र र
हर्य्यताम्। मा। जन्तिश्नुम्भन्तिविप्रम्मरुतोगणेनकवि
र र र र र २ १ २ र २ १
गीर्भिःकाव्येनाकविःसन्सोमः। पा। औ३होहायि।
२ ३र र २ १ १
विचा२३मतायि। एत्ये। हो३। ऊम्मा२। रा५२यि
५ ३ ४ २ ४ ५
भो ३ ५ हायि ॥(१) आ५वि। मना३या३ऋषिकृत्।
१ र र र र र र र
सू। वर्षाःसहस्रनीथःपदवीःकवीनांस्तृतीयन्धाममहिषः

* ऊ० गा० ९प्र० १ख० १२सा०।

२ २ १ १ १ २ १ १२ २
सिषासन्सोमः। वा। औ३होवायि। राजा२३मनू।

३२२ २ १ १ २ ३
राजौहो३। ऊम्मा२। ता५२यिष्टो३५हायि ॥(२) चा

२ ४ २ ४ ५ १ २ २
५५मू। षक्षरा३यिना२ःशकुनाः। वायि। भूत्वागोवि

२ २ २ २ २ २ १२
न्दुर्द्रप्स्आयुधानिबिभ्रद्पामूर्म्मि९ःसचमानःसमुद्रन्तुरी।

२ ३ २ १२ २ ३२ २ १
या। औ३होवायि। धामा२३महायि। घोवौहो३।

१ १ १
ऊम्मा२। वा५२क्रो३५हायि(३) ॥ ७ * ॥ [२]

२
॥ हाउऊवायिवासिष्ठम् ॥ हायि। उऊवायि।

३ १ ३२४२ ५ १ २ १ २ ३ ४ ५
अिग्रा३४औहोवा। जन्ना। ना३९हय्यं। तम्मृजन्ता

३ १ ३२ ४२ ५ १ २ १ २
यि। प्रुम्भा३४औहोवा। तिवायि। प्रा३म्मह। तौ

३ ४ ५ ३ २ ३२५२ ५ १२ २ १ २
गणेना। कावा३४औहोवा। गीर्भायिः। का३वियें।

१ ३ ४ ५ ३२ २ ३२ ४२ ५ १ २
नाकविःसान्। सोमा३४औहोवा। पवायि। चा३

१ २ २ ४ ३ १
मति। आ३४३यि। ती३रा५यिभा६५६न् ॥(१) त्वया

* ऊ० गा० १०प्र० १ख० ७सा०।

३र ४र ५ १ २ १ २ ३ ४ ५ २
३४औहोवा । मनाः । या२ऋषि । ह्रत्सुवर्णाः । स

२ ३र ४र ५ १ २ १ २ ३ ४ ५
हा३४औहोवा । मनायि । या३:पद । वी:कवीनाम् ।

३ २ ३र ४र ५ १ २ १ २ ३ ४ ५
तृता३४औहोवा । यन्धा । मा३महि । षःसिषासान् ।

३र २ ३र ४र ५ १ २ १ २ २
सोमा३४औहोवा । विरा । जा३मनु । रा३४३ । जा

४ ३ २ ३र ४र ५ १
३तापुयिष्टू६५६प् ॥(२) चमू३४औहोवा । श्येनाश्रायि ।

२ १ २ ३ ४ ५ ३र २ ३र ४र ५ १
ना३:शकु । नोविभूत्वा । गोवा३४औहोवा । वृन्द्री ।

२ १र १र २ ५ ३ २ ३र ४र ५ १
प्सा३आयु । धानिविभ्रात् । अपा३४औहोवा । ऊ

२ १ र २ ३ ४ ५ २
र्मायिम् । सचमा । नःसमुद्राम् । हायि । उक्थवा

३ २ ३र ४र ५ १ २ १ २
यि । तुरा३४औहोवा । यन्धा । मा३महि । षो३४

१ ४
३ । वा३यिवा५क्षा६५६यि(३) ॥ ७ * ॥ [३]

३ २ ३ २ ३र
॥ उक्थवायिवासिष्ठम् ॥ उक्थवायि । शिशा३४औ

४र ५ १ २ १ २ ३ ४ ५ ३ २
होवा । जज्ञा । ना३ऽहर्य्य । तंमृजन्तायि । प्रभा

* ऊ० गा० १७प्र० १ख० ७सा० ।

३४औहोवा। तिवायि। प्रा३म्मरु। तोगणेना। क
वा३४औहोवा। गौर्भायिः। का३वियै। नाकविःसा
न। सोमा३४औहोवा। पवायि। त्वा३मति। ओ
३४३यि। वी३रा५यिभा६५६न्॥(१) ऋषा३४औहोवा।
मनाः। या३ऋषि। कृत्स्वर्षाः। सहा३४औहोवा।
स्रनायि। था३ःपद। वीःकवीनाम्। तृता३४औहो
वा। धन्वा। मा३महि। षःसिषासान्। सोमा ३ ४
औहोवा। विरा। जा३मनु। रा३४३। जा३ता५
यिष्टु६५६प्॥(२) चमू३४औहोवा। षच्छ्रायि। ना
३ःशकु। नोविभृत्वाम्। गावा३४औहोवा। दुह्री।
प्सा३आयु। धानिविभ्रात्। अपा३४औहोवा। ऊ
र्मायिम्। सचमा। नःसमुद्राम्। उक्थवायि। तु

राइ४औहोवा । यन्धा । मा३मचि । षो३४३ । वा

इयिवा५न्धा६५६यि(३) ॥ १८ * ॥ [४]

॥ उद्भद्गार्गवम् ॥ अिग्नुञ्जामार२३ । नऽ्च्य्यीता

२३म् । मूजन्तायि । शुभ्मन्तायिवा२३यि । प्रमाहुतो

२३ । गवेना । कविर्गीयिर्भा२३यिः । काविये्ना२३ः ।

कविःसान् । सोमःपावा२३यि । च्मतायिये२३ । ति

रेभा३ना३ ॥(१) ऋषिमाना२३ । ओयऋषीकॄ२३त् ।

सुवर्षाः । सहस्राना२३यि । थःपदावा२३यिः । कवी

नाम् । तृतीयान्धा२३ । ममच्चायिषा२३ः । सिषासा

न् । सोमोवायिरा२३ । जमनूरा२३ । जतिष्टा३१उ ॥(२)

चमूषाष्टना२३यि । नःशकूनो२३ । विभृत्वा । गोवि

न्दूद्रा२३ । प्सञ्चायूधा२३ । निविभ्रात् । अपामूर्म्मा

* ऊ० गा० १७प्र० १ख० १८सा० ।

२ १ २ १ १र १
२३यिम्। सचमाना२३ः। समुद्राम्। तुरीयान्धा२३।
ममहायिषो२३। विवक्ता३१उवा२३४५(३) ॥ ४ * ॥ [५]

२र र २
॥ वैश्वज्योतिराद्यम् ॥ हाउहोवा३हायि। श्रिग्रुक्ष्म
र १ ७ १ १ १ १ २
ज्ञानांऽहर्य्या३तांसृजन्ता२३४५यि। प्रुक्ष्मन्तिविप्रम्मरु
१ ७ र १ १ १ १ २ र र १ ७ १ १ १ १
३तोगणेना२३४५। कविर्गीर्भिःकाव्ये३नाकविःसा२३४५
२र १ ७र १ १ १ १ २
न्। सोमःपवित्रमती३यायितिरेभा२३४५न् ॥(१) ऋषि
र १ ७ २ र २
मनायऋषी३कृत्स्वर्षा२३४५ः। सहस्रनीथःपदा३वायिः
७ र १ १ १ १ २ र १ ७र १ १ १ १
कवीना२३४५म्। तृतीयन्धाममही३षाःसिषासा२३४५
२र र र १ ७ १ १ १ १ २ र र
न्। सोमोविराजमनू३राजतिष्टू२३४५प् ॥(२) चमूषच्छ्ये
१ ७ १ १ १ १ २र र १ ७
नःशकुनोविभृत्वा२३४५। गोविन्दूर्द्रप्सआयू३धानिबि
१ १ १ १ २ र र ५र१ ७ १ १ १ १
भ्रा२३४५त्। अपामूर्म्मिंऽसचमा३नाःसमुद्राम्२३४५म्।

---

* ऊ० गा० २३प्र० २ख० ४गा०।

१२ २ ३२ १ ७ ११११ २२ २ २
तुरीयन्धाममहो३षोविवक्ता२३४५यि। हाउहोवा३हायि।
१११
वा३४५(३)॥ ७॥ * [६] ६

एतेसोमा इति नवर्चं द्वितीयं सूक्तं,

तत्र प्रथमा।

३१२ २२ ३ २ ३१२ २२ ३ १ २
एतेसोमाअभिप्रियमिन्द्रस्यकाममक्षरन्।
१२ ३ २क २२
वर्द्धन्तोअस्यवीर्यम्॥ १ †॥

"एते" अभिषुता इमे सोमाः "अस्य" इन्द्रस्य "वीर्य्यं" शक्तिं "वर्द्धन्तः" वर्द्धयन्तः "इन्द्रस्य" "कामं" काम्यं "प्रियं" प्रीतिकरं "समभ्यक्षरन्" अभ्यवर्षन् अभिपवन्ते॥ १॥

अथ द्वितीया।

३ १ २ ३ २ ३ १ २ १ २३ १ २
पुनानासश्चमूषदोगच्छन्तोवायुमश्विना।
१ २ ३ १ २
तेनोधत्तसुवीर्यम्॥ २ ‡॥

हे सोमाः! "पुनानासः" पुनाना अभिषूयमाणाः "चमूषदः"¶ चमसेषु सीदन्तः गच्छन्तः "वायुम्" "अश्विना" अश्विनौ च

* ऊ० गा० २३प्र० २ख० ७सा०।

† ऋ० वे० ६, ७, ३०, १।

‡ ऋ० वे० ६, ७, ३०, २।

¶ 'चमूषदः—अधषवणेषु सीदन्ति अथवा अभिषवणफलकचर्मणि उपरि सीदन्ति चमूषदः'—इति वि०।

"गच्छन्तः" प्राप्नुवन्तः ते यूयं "नः" अस्मभ्यं "सुवीर्य्यं" शोभन-वीर्य्यं "धत्त" प्रयच्छत ॥

"धत्त"-"धान्तु"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ २ १ २ १ १र २र
इन्द्रस्यसोमराधसेपुनानोहार्दिचोदय ।
३ २ ३ १ २ ३ १ २
देवानांयोनिमासदम् ॥ ३* ॥

हे सोम ! "पुनानः" पूयमानस्त्वं "राधसे इन्द्रस्य" इन्द्रस्य संराधनाय "हार्दि"—इति हृदय-सम्बन्धि स्थानं† "चोदय" प्रेरय । अहमपि "देवानाम्" इन्द्रादीनां "योनिं" स्वर्गाख्यं स्थानम् "आसदं" प्राप्तवान् [यद्वा, देवानां यजन-साधनं यज्ञाख्यं स्थानं प्राप्तवानस्मि ॥

"देवानाम्"-"ऋतस्य"—इति पाठौ ॥ ३ ॥

अथ चतुर्थी ।

३१ २ ३ २ ३ १२ ३१ २ ३२ ३ १ २
मृजन्तित्वादशक्षिपोहिन्वन्तिसप्तधीतयः ।
२ ३ १ २
अनुविप्राअमादिषुः ॥ ४ ‡ ॥

---

* ऋ० वे० ६, ७, ३०, ३ ।

† 'हार्दि—हृदये'—इति वि० ।

‡ ऋ० वे० ६, ७, ३०, ४ ।

हे सोम! "त्वा" त्वां "दश" दशसङ्ख्याकाः ["क्षिपः अङ्गुलिनामैतत् (२, ५, ३,)] अङ्गुलयः "मृजन्ति" शोधयन्ति। ततः "सप्त" सप्तसङ्ख्याकाः* "धीतयः" स्तोत्रकाश्च त्वां "हिन्वन्ति" स्व-स्व-व्यापारैः प्रीणयन्ति। तथा "विप्राः" मेधाविनः स्तोतारश्च त्वाम् "अनु अमादिषुः" अनुमादयन्ति ॥४॥

अथ पञ्चमी।

२ १ २ २ १ २ ३१ २ ३ १ २र ३क २र
देवेभ्यस्त्वामदायकꣳसृजानमतिमेष्यः।

१र २र
सङ्गोभिर्वासयामसि ॥ ५ † ॥

हे सोम! "कं" सुखभूतं "त्वा" त्वां "देवेभ्यः" देवानां "मदाय" मदार्थं "गोभिः" गोविकारैः पयोभिः "संवासयामः" संस्थापयामः। कीदृशम्? "मेष्यः" अवेर्लोमानि दशापवित्र रूपेण "अति सृजानम्" अत्यन्तं सृजन्तं दशापवित्ररूपेषु अवेर्लोमसु वर्त्तमानमित्यर्थः ॥ ५ ॥

अथ षष्ठी।

२ १ २ १ २ १र १र ३ १र २र
पुनानःकलशेष्वावस्त्राण्यरुषोहरिः।

२ ३ १ २
परिगव्यान्यव्यत ॥ ६ ‡ ॥

---

* 'सप्तधीतयः'—बुद्धियुक्ताः सप्तर्त्विजः, धीतयः स्थापनकराः'—इति वि०।

† ऋ० वे० ९, ७, ३०, ५।

‡ ऋ० वे० ९, ७, ३०, ६।

"पुनानः" पूयमानः "कलशेषु" द्रोणकलशेषु* आसिच्यमानः "अरुषः" आरोचमानः "हरिः" हरितवर्णः सोमः "गव्यानि" गो-सम्बन्धीनि पयःप्रभृतीनि "वस्त्राणि" वासांसि "परि अव्यत" पर्य्याच्छादयति† ॥ ६ ॥

अथ सप्तमी।

३ २ ३ १ २ ३ २उ ३ २ ३ १ २
मघोनआपवस्वनोजहिविश्वाअपद्विषः।

२ ३ १ २ ३ १ २
इन्दोसखायमाविश ॥ ७ ‡ ॥

हे "इन्दो" सोम! "मघोनः" धनवतः "नः" अस्मान् "आ" आभिमुख्येन "पवस्व" क्षर "विश्वा" विश्वान् "द्विषः" द्वेष्टॄन् "अप जहि" मारय च "सखायं" मित्रभूतमिन्द्रम् "आविश" प्राप्नुहि ॥ ७ ॥

अथाष्टमी।

३ १ २ ३ १र २र ३ १ २
नृचक्षसन्त्वावयमिन्द्रपीतꣳस्वर्विदम्।

३ १ २ ३ १र २
भक्षीमहिप्रजामिषम् ॥ ८ ¶ ॥

* 'कलशेषु कलशसम्बन्धिषु ग्रहचमसादिषु'—इति वि०।

† 'अव्यत—गमय'—इति वि०

‡ ऋ० वे० ६, ७, ३१, १।

¶ ऋ० वे० ६, ७, ३१, २।

हे सोम! "नृचक्षसं" नृणां द्रष्टारं "स्वर्विदं" सर्वज्ञम्* "इन्द्रपीतं" त्वां सेवमाना वयं "प्रजां" पुत्रादिकाम् "इषम्" अन्नञ्च "भक्षीमहि" भजेम॥ ८॥

अथ नवमी।

३ २ ३ १र २र ३ १ २ ३ १र २र
वृष्टिन्दिवःपरिस्रवद्युम्नम्पृथिव्याअधि।
१ २ ३ १ २
सहोनःसोमपृत्सुधाः॥ ९ †॥ २

हे "सोम!" त्वं "दिवः" द्युलोकात् "वृष्टिं" वर्षं "परिस्रव" परितो वर्ष, "पृथिव्या अधि" [अधीति सप्तम्यर्थानुवादी] "द्युम्नम्" अन्नञ्च उत्पादयेति शेषः। "नः" अस्माकं‡ "सहः" बलं "पृत्सु" सङ्ग्रामेषु "धाः" धेहि॥ ९॥ २

इति सामवेदार्थ प्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य प्रथमः खण्डः॥ १॥

---

* 'स्वर्विदं—सर्वस्य वेत्तारम्'—इति वि०।

† ऋ० वे० ६, ७, ३१, २।

‡ 'नः—अस्माकम्'—इति वि०।

अथ द्वितीये खण्डे—

सोमः पुनान इति नवर्चं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ १ २

सोमःपुनानोअर्षतिसहस्रधारोअत्यविः ।

३ १२ २२ ७ २

वायोरिन्द्रस्यनिष्कृतम् ॥ १ * ॥

अयं "पुनानः" पावकः "सोमः" अर्षति" गच्छति । कीदृशोऽयम्? "सहस्रधारः" अपरिमितधारः "अत्यविः" अवि-शब्देन तल्लोमान्युच्यन्ते; अवेर्लोमभिर्निष्पादितं दशापवित्रमित्यर्थः, तदतिक्रम्य गच्छतीत्यत्यविः । किमर्थम्? "वायोः" "इन्द्रस्य" च पानायेति शेषः । किम्प्रति? "निष्कृतम्" [ निरित्येषः समित्येतस्मिन्नर्थे ] संस्कृतं पात्रं प्रति ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १२ १२

पवमानमवस्यवोविप्रमभिप्रगायत ।

३ २ ३ १ २

सुष्वाणन्देववीतये ॥ २ † ॥

हे "अवस्यवः" रक्षण-कामाः! उद्गात्रादयो यूयं "पवमानं" शोधकं "विप्रं" विशेषेण देवानां प्रीणयितारं विप्रवद्बहुं वा

* ऋ० वे० ९, ८, १, १ ।

† ऋ० वे० ९, ८, १, २ ।

[अथवा विप्रइति मेधावि नामसु (निघ० ३, १५,१) मेधाविनम्] "देववीतये" देवपानाय* "सुष्वाणम्" अभिषूयमाणं सोमम् "अभि" आभिमुख्येन "प्रगायत" प्रकर्षेण स्तुत ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २　　३ १ २र ३ १ २
पवन्तेवाजसातयेसोमाःसहस्रपाजसः ।
३　२ ३ १ २
गृणानादेववीतये ॥ ३ † ॥

"पवन्ते" चरन्ति "सोमाः" । किमर्थम् ? "वाजसातये" अन्नस्य लाभाय । कीदृशाः ? "सहस्रपाजसः" बहुबलाः नृणां बलप्रदा इत्यर्थः‡ "गृणानाः" [कर्मणि कर्तृप्रत्ययः (३,१,८५)] स्तूयमानाः । पुनः किमर्थम् ? "देववीतये" [देवानां वीतिर्गतिः प्राप्तिलक्षणं वा यस्मिन् स देववीतिः] यज्ञः, तदर्थम् [यज्ञसिद्धिः साक्षात् प्रयोजनं तद्द्वारा वाज-लाभइति ॥ ३ ॥

अथ चतुर्थी ।

३ २ ३ १ २　　३ १ २　　३ १र २र
उतनोवाजसातयेपवस्वबृहतीरिषः ।
२ १ २　　३ १ २
द्युमदिन्दोसुवीर्यम् ॥ ४ ¶ ॥

---

* 'देववीतये—देवानां भक्षणाय'—इति वि० ।

† ऋ० वे० ६, ८, १, ३ ।

‡ 'सहस्रपाजसः—सहस्र-पान-समर्थाः'—इति वि० ।

¶ ऋ० वे० ६, ८, २, १ ।

हे "इन्दो" "द्युमत्" दीप्तिमत् "सुवीर्य्यं" शोभन-वीर्य्यं सामर्थ्यञ्च "पवस्व" क्षर, शोभन-सामर्थ्योपेता धाराः पवस्वेत्यर्थः। "उत्" अथवा "नः" अस्माकं"* "वाजसातये" सङ्ग्रामाय† "बृहतीः" "इषः" द्युमत् सुवीर्यं सम्पादयितुं पवस्वेति योज्यम् ॥ ४ ॥

अथ पञ्चमी।

१ २　३ १र ३ २ ३ १ २ ३ १ २
अत्या हियाना न हेतृभिरसृग्रं वाजसातये।
२र ३ १ २ ३ १ २
वि वारमव्यमाशवः ॥ ५ ‡ ॥

"वाजसातये" सङ्ग्रामाय "हियानाः" प्रेर्य्यमाणाः आशवः शीघ्रं धावन्ति तद्वत् "हेतृभिः" प्रेरकैः प्रेर्यमाणाः "आशवः" शीघ्रगामिनः सोमाः "वाजाय" अन्नलाभाय "अव्यं" "वारं" वालं दशापवित्रं "व्यसृग्रम्" व्यतिसृजन्ति¶ ॥ ५ ॥

---

* 'नः—अस्मभ्यम्'—इति वि०।

† 'वाजसातये अन्नदानार्थम्'—इति वि०।

‡ ऋ० वे० ६, ८, २, २।

¶ "व्यसृग्रम्"—इत्यत्र ऋगादिपादाद् "अति"—इत्युपसर्गः, ऋक्तृतीयपादाद् "वि"—इत्युपसर्गश्च सङ्गृहीतः, "अत्या"—इति श्रुतावापदस्यानर्थक्यमपि स्वीकृतमाचार्येण। विवरणकृता त्वहिनाम दानवइत्यादिना व्याख्यातम्। परन्तूभयविधमेव व्याख्यानं पदग्रन्थविरुद्धत्वादुपेक्षणीयम्, तत्र हि—"अत्याः, हियानाः"—इति पाठ-दर्शनात्।

अथ षष्ठी।

१ २ ३ १ २ ३ १र १र ३ २ ३ १ २
तेनःसहस्रिणꣳरयिम्पवन्तामासुवीर्यम्।
३ २ ३ २ ३ १ २
स्वानादेवासइन्दवः॥ ६ *॥

"ते" "इन्दवः" सोमाः "नः" अस्माकं "सहस्रिणं" सहस्र-सङ्ख्या-युक्तं "रयिं" धनं "सुवीर्यं" च "आ पवन्ताम्"†। कीदृशास्ते? "स्वानाः" सुवानाः सूयमाना "देवासः" द्योत-नादि-गुणकाः॥

"स्वानाः"-"सुवानाः"—इति पाठौ॥ ६॥

अथ सप्तमी।

१ १ २ ३ १ २ ३ २ ३ २उ ३ १ २
वाश्रा अर्षन्तीन्दवोभिवत्सन्नमातरः।
२ १र १र
दधन्विरेगभस्त्योः॥ ७ ‡॥

"वाश्राः" शब्दयन्तः¶ "इन्दवः" सोमाः "अभ्यर्षन्ति" पात्रंप्रति वाश्राः शब्दकारिण्यो "मातरः" मातृभूता गावः

* ऋ० वे० ६, ८, २, ३।

† 'आ—आनुपूर्व्येण'—इति वि०।

‡ ऋ० वे० ६, ८, २, ४।

¶ 'वाश्राः—वासनशीलाः'—इति वि०।

"वत्सं न" वत्सं यथा प्रत्यागच्छन्ति तद्वत् तएव "गभस्त्योः" बाह्वोः "दधन्विरे" ध्रियन्ते च॥

"मातरः"-"धेनवः"—इति पाठौ ॥ ७ ॥

अथाष्टमी ।

२ ३ १ २ ३ १र २र ३ १ २
जुष्टइन्द्रायमत्सरःपवमानःकनिक्रदत् ।
१ २ २ ३ १ २
विश्वाअपद्विषोजहि ॥ ८ * ॥

"इन्द्राय" "जुष्टः" पर्याप्तः सोमो भवतीति शेषः "मत्सरः" सोमः [ "मन्दतेस्तृप्ति-कर्मणः"—इति निरुक्तम् ] "पवमानः" पूयमानः तादृशः सोमः "कनिक्रदत्" "विश्वाः द्विषः" सर्वानस्माकं द्वेष्टॄन् "अप जहि" ॥

"पवमानः"-"पवमाना"—इति पाठौ ॥ ८ ॥

अथ नवमी ।

३ २ ३ १ २ ३ १ २ ३ १ २
अपघ्नन्तोअराव्णःपवमानाःस्वर्दृशः ।
१ २ ३ १ २
योनावृतस्यसीदत ॥ ९ † ॥ ३

---

* ऋ० वे० ९, ८, २, १ ।

† ऋ० वे० ९, ८, १, २ ।

हे "पवमानाः!" "अराव्णः" अदानान् यजमानान् "अप घ्नन्तः" हिंसन्तः "स्वर्दृशः" सर्वस्य द्रष्टारश्च* यूयम् "ऋतस्य योनौ" यज्ञस्य† स्थाने "सीदत"। अथ सोम-पानार्थमुक्तलक्षणा देवा ऋतस्य योनौ सीदतेति योज्यम् ॥ ८॥ ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीय-खण्डे—

सोमा असृग्रमिति नवर्च्चं विद्यमानमेकं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
सोमा असृग्रमिन्दवः सुता ऋतस्य धारया।
१ २ ३ १ २
इन्द्राय मधुमत्तमाः ॥ १ ‡ ॥

"ऋतस्य" यज्ञार्थं "सुताः" अभिषुताः "मधुमत्तमाः" अतिशयेन माधुर्य्योपेताः "इन्दवः" सोमाः "इन्द्राय" इन्द्रार्थं "धारया" "असृग्रम्" सृज्यन्ते ॥

"धारया"-"सादने"—इति पाठौ ॥ १ ॥

---

* 'स्वर्दृशः—स्वर्गस्य लोकस्य दर्शितारः'—इति वि०।

† 'ऋतस्य—सत्यस्य यज्ञस्यान्नस्य वा'—इति वि०।

‡ ऋ० वे० ६, ७, ३८, १।

अथ द्वितीया।

२ १र २र ३१ २ ३२उ ३ १ १
अभिविप्राअनूषतगावोवत्संनधेनवः।
२ ३ १ २ ३ १२
इन्द्रꣳसोमस्यपीतये ॥ २ * ॥

"विप्राः" मेधाविनः† "सोमस्य" "पीतये" पानाय "इन्द्रम्" "अभि अनूषत" अभिष्टुवन्ति। तत्र दृष्टान्तः— "धेनवः" प्रीणयित्र्यो गावः "वत्सं न" वत्सं यथा पयः-पानाय अभिशब्दयन्ति तद्वत् ॥

"धेनवः"-"मातरः"—इति पाठो ॥ २ ॥

अथ तृतीया।

३ ११ ३ १२३ १-२ ३१ ३ १ २
मदच्युत्क्षेतिसादनेसिन्धोरूर्माविपश्चित्।
०१ २ ३ १र २र ३ १
सोमोगौरीअधिश्रितः ॥ ३ ‡ ॥

"मदच्युत्" मदकरस्य रसस्य च्यावयिता सोमः "सदने" यज्ञस्य स्थाने "क्षेति" निवसति। एतदेव विवृणोति—"सिन्धोः" नद्याः "ऊर्मौ" ऊर्मौ तरङ्गे "विपश्चित्" विद्वान् सोमः "गौरीं

* 'विप्राः—ऋत्विजः'—इति वि०।

† ऋ० वे० ६, ७, ३८, २।

‡ ऋ० वे० ६, ७, ३८, ४।

अधि"* गौर्यामधि [ अधीति सप्तम्यर्थानुवादः, माध्यमिकायां वाचि गौरी गान्धर्वीति वाङ्नामैतत् ( निघ० १,११,५-६ ) ] "श्रितः" निवसति ॥ ३ ॥

अथ चतुर्थी ।

३ १र २र २ २ १ १ ३
दिवोनाभाविचक्षणोव्यावारे†महीयते ।
२ ३ २ ३१ २ ३ १
सोमोयःसुक्रतुःकविः ॥ ४ ‡ ॥

"यः" "सुक्रतुः" सुप्रज्ञः "कविः" क्रान्त-कर्मा "विचक्षणः" विद्रष्टा स "सोमः" "दिवः" अन्तरिक्षस्य¶ "नाभा" नाभौ नाभिभूते "अव्याः" अवेः "वारे" वाले "महीयते" पूज्यते ॥४॥

अथ पञ्चमी ।

१र २र ३ २ ३ २ ३ २ ३ २ ३ १ २
यःसोमःकलशेष्वा§अन्तःपवित्रआहितः ।
२उ ३ १ २
तमिन्दुःपरिषस्वजे ॥ ५ ‖ ॥

---

* "इदूतौ च सप्तम्यर्थे ( १, १, १९ )"—इति प्रगृह्यभावः ।

† "अव्यो वारे"—इति ऋ०-पाठः ।

‡ ऋ० वे० ६, ७, ३८, ३ ।

¶ 'दिवः—द्युलोकस्य'—इति वि० ।

§ "कलशेष्वां"—इति ऋ०.पाठः ।

‖ ऋ० वे० ६, ७, ३८, ५ ।

"यः" सोमः "कलशेषु" कुम्भेषु आस्ते, यश्च "पवित्रे" पवित्रस्य "अन्तः" मध्ये "आ हितः" निहितः, "तं" त्वामंशभूतं सोमम् "इन्दुः" तदभिमानी सो देवः "परिषस्वजे" प्रविशति ॥ ५ ॥

अथ षष्ठी ।

१उ ३ १ २ ३ १र २र ३ १ १
प्रवाचमिन्दुरिष्यतिसमुद्रस्याधिविष्टपि ।

२ ३ १ २ ३ १ २
जिन्वन्कोशम्मधुश्चुतम् ॥ ६ * ॥

"इन्दुः" सोमः [ उन्दी क्लेदने (रु० प०)—इत्यस्य रूपम् क्लेदनवांश्च "मधुश्चुतं" मधुनस्स्रावकं द्रोण-कलशं "जिन्वन्" प्रीणयन् पूरयन्नित्यर्थः । समुद्रस्यान्तरिक्षस्य "अधिविष्टपि" विष्टब्धे स्थाने "वाचं" "प्रेष्यति" प्रेरयति ; पवित्रे पूयमानः शब्दं करोतीत्यर्थः ॥ ६ ॥

अथ सप्तमी ।

१ १ १ २ ३ १ १ ३र ३ १ १ ३ १ २
नित्यस्तोत्रोवनस्पतिर्धीनामन्तःसबर्दुघाम् ।

३ १र २र ३ १
हिन्वानोमानुषायुजा ॥ ७ † ॥

"नित्यस्तोत्रः" सन्ततस्तोत्रः "वनस्पतिः" वनानां स्वामी, सोमः "मानुषा" मानुषाणि "युजा" युग्मानि‡ अहीनैकाहा-

* ऋ० वे० ९, ७, १८, ६ ।

† ऋ० वे० ९, ७, १९, १ ।

‡ "युजा—योजिन"—इति वि० ।

अकानि* "हिन्वानः" प्रीणयन् "सबर्दुघाम्" अमृतसदृशाति-प्रियवचनानि दोग्ध्रीम्† "अन्तः" स्तोतॄणां मध्ये स्थितां "धेनां" स्तुतिरूपां वाचं‡ गृह्णात्विति शेषः ॥

"धेनामन्तसबर्दुघाम्"-"धीनामन्तस्सबर्दुघसः"—इति पाठौ ॥ ७ ॥

अथाष्टमी ।

१ २ ३ २ ३ १ २
आपवमानधारयरयिꣳसहस्रवर्चसम् ।
२ ११ ३ १ २
अस्मेइन्दोस्वाभुवम् ॥ ८ ¶ ॥

हे "पवमान" पूयमान ! पुनान ! वा "इन्दो" सोम ! त्वं "सहस्रवर्चसं" बहुदीप्तिं "स्वाभुवम्" शोभन-भवनं "रयिं" धनम् "अस्मे" अस्मासु "धारय" प्रक्षिपेत्यर्थः ॥ ८ ॥

अथ नवमी ।

३ १ ३२ ३ २ ३ १उ ३ १र २र ३ १
अभिप्रियादिवःकविर्विप्रःसधारयासुतः ।
१ २ ३ १ २
सोमोहिन्वेपरावति ॥ ९ § ॥ ४

---

* दिनैकसम्पाद्यमेकाहम्, द्वादशदिनातिरिक्तसम्पाद्यं सत्रम्, अहीनमन्यत् यागकर्म ।

† 'सबर्दुघां—सुखदोग्ध्रीं'—इति वि० ।

‡ 'धेनां—धेनूनाम्'—इति वि० । "धेना"—इति निघण्टौ वाङ्नामसु जन-चत्वारिंशत्तमं पदम् ( १, ११ ) ।

¶ ऋ० सं० ६, ७, ३९, २ ।

§ ऋ० सं० ६, ७, ३९, ३ ।

"कविः" क्रान्तकर्म्मा, "सुतः" अभिषुतः, सोमः "परावति" विप्रकृष्टे देशे स्थितः सन् "विप्रः" मेधावी "सधारया" स्वस्य धारया "दिवः" द्युलोकस्य "प्रिया" प्रियाणि स्थानानि "अभि" लक्ष्य "हिन्वे" प्रेरयति ॥

"दिवःकविः"-"दिवस्पतिः"—इति पाठौ, "हिन्वेपरावति"-"हिन्वेपरानोअर्षति"—इति च, "सुतः"-"कविः"—इति च ॥८॥ ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

अथ उत्तेशुष्मास इति चतुर्थे खण्डे—

विद्यमानं पञ्चर्चं सूक्तं,

तत्र प्रथमा।

२ ३ १ २ ३ १ २ ३ १ २ ३ २
उत्तेशुष्मासईरतेसिन्धोरूर्मेंरिवस्वनः।

३ १ २ ३ २
वाणस्यचोदयापविम् ॥ १ * ॥

हे सोम! "ते" तव "शुष्मासः" शुष्मा वेगाः "उत् ईरते" उद्गच्छन्ति। तत्र दृष्टान्तः—"सिन्धोः" समुद्रस्य "ऊर्मेरिव"

---

* ऋ० वे० ७, १, ७, १।

यथा तरङ्गात् "स्वनः" ध्वनिः उद्गच्छति तद्वत्*। स त्वं "वाणस्य" विसृष्टस्य नालस्य शततन्त्रीकस्य वीणा-विशेषस्य† "पविं" [शब्द-नामैतत् (निघ० १, ११)] शब्दं "चोदय" प्रेरय, वेगेन स्यन्दमानस्त्वं विसृष्ट-वाण-शब्द-सदृशं शब्दं कुर्व्वित्यर्थः ॥ १ ॥

अथ द्वितीया।

३ १२ १ २ २ १र २र २ १ २
प्रसवेतउदीरतेतिस्रोवाचोमखस्युवः।
२उ ३ २ ३ १ २
यदव्यएषिसानवि ॥ २ ‡ ॥

हे सोम! "ते" तव "प्रसवे" सति "मखस्युवः" यज्ञ-मिच्छतो यजमानस्य "तिस्रोवाचः" ऋग्यजुःसामात्मकानि त्रीणि वाक्यानि "उदीरते" उद्गच्छन्ति। कदेत्यत आह— "यद्" यदा "सानवि" उच्छ्रिते "अव्ये" अविमये पवित्रे पवित्रम् "एषि" गच्छसि ॥ २ ॥

अथ तृतीया।

१ २ १ ३ १ २ ३ १र २र ३ १ २
अव्यावारैःपरिप्रियꣳहरिꣳहिन्वन्त्यद्रिभिः।
१ २ २ १ २
पवमानम्मधुश्चुतम् ॥ ३ ¶ ॥

---

* 'सिन्धोरूर्म्मेरिव—अपामिव सङ्घातः, यादृक् तेषां स्वनः'—इति वि०।

† 'वाणस्य—वीणाविशेषस्य'—इति वि०।

‡ ऋ० वे० ७, १, ७, २।

¶ ऋ० वे० ७, १, ७, ३।

"प्रियं" देवानां प्रीतिकरं "हरिं" हरितवर्णं "अद्रिभिः" ग्रावभिः अभिषुतं "मधुश्चुतं" मधुनो रसस्य च्यावयितारं "पवमानं" सोमम् "अव्याः" अवेः "वारैः" वालैः "परि हिन्वन्ति" ऋत्विजः परिप्रेरयन्ति ॥ ३ ॥

अथ चतुर्थी ।

१ २ ३ २ ३ १ ३
आपवस्वमदिन्तमपवित्रन्धारयाकवे ।
३ २ ३ १ २ ३ १२
अर्कस्ययोनिमासदम् ॥ ४ * ॥

हे "मदिन्तम" मादयितृतम ! "कवे" क्रान्तकर्म्मन् ! सोम ! "अर्कस्य" अर्चनीयस्य इन्द्रस्य† "योनिम्" उदरभूतं स्थानम् "आसदं" प्राप्तुं‡ "पवित्रम्" अतीत्य "धारया" सम्पातेन "आ पवस्व" आभिमुख्येन चर ॥ ४ ॥

अथ पञ्चमी ।

१ २ ३ १ २ ३ १ ३ १ २
सपवस्वमदिन्तमगोभिरञ्जानोअक्तुभिः ।
१ २ ३ १ २
एन्द्रस्यजठरंविश ॥ ५ ¶ ॥ ५

---

* ऋ० वे० ६, ८, २५, ६ ।

† 'अर्कोद्रोणकलशः अथवा अर्कआदित्यः अथवा आदित्यएअयोऽर्काः अथवा अर्का मन्त्रास्तेषां योनिं स्थानम्'—इति वि० ।

‡ 'आसदम्—आसीदम्'—इति वि० ।

¶ ऋ० वे० ७, १, ७, ५ ।

हे "मदिन्तम" मादयितृतम ! सोम ! "अक्तुभिः" अञ्जन-साधन-भूतैः "गोभिः" गोविकारैः पयोभिः "अञ्जानः" अज्यमानः संस्तूयमानः स त्वं "पवस्व" चरत। "अनन्तरम्" "इन्द्रस्य" "जठरम्" उदरम् "आविश" प्रविश॥ "ऐन्द्रस्यजठरं-विश"—"इन्द्रइन्द्रायपीतये"—इति पाठौ॥ ५॥ ५।

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य
चतुर्थः खण्डः॥ ४॥

---

अथ पञ्चमे-खण्डे—

अयावीतीति त्र्यृचात्मकम् प्रथमं सूक्तम्,

तत्र प्रथमा।

३ १ ३ १र २र ३ १ २ ३ १ २ १
**अयावीतीपरिस्रवयस्तइन्दोमदेष्वा।**

३ १ २ ३ १र २
**अवाहन्नवतीर्नव॥ १ *॥**

हे "इन्दो" सोम ! "अया" अनेन रसेन "वीती" वीत्यै इन्द्रस्य भक्षणाय "परिस्रव" परिचर†। कीदृशेन रसेनेत्यत आह—"ते" तव "यः" रसः "मदेषु" सङ्ग्रामेषु "नवतीर्नव" नवनवति-सङ्ख्याकाः शत्रुपुरीः "अवाहन्" जघान, इमं सोमरसं पीत्वा मत्तः सन्निन्द्रो नवनवतिसङ्ख्याकाः शत्रुपुरीः जघानेति कृत्वा रसो जघानेत्युपचारः॥ १॥

---

* ऋ० चा० ६, १, १, ९ ( २भा० ५२४० )=ऋ० वे० ७, १, १८, १।

† 'अया—अनया, वीत्या मार्गेण परिस्रव'—इति वि०।

अथ द्वितीया।

१ २ ३ २ ३ १　२ ३ १ २　　३ १ २
पुरः सद्य इत्थाधिये दिवोदासाय शम्बरम्।
१ ३ २ ३ २ ३ १ २
अध त्यन्तुर्वशंयदुम्॥ २ *॥

"सद्यः" एकस्मिन्नेवाहनि† "पुरः" शत्रूणां पुराणि सोमरसः अवाहन्। "इत्था धिये" सत्य-कर्मणे‡ "दिवोदासाय" राज्ञे "शम्बरं" शत्रु-पुराणां स्वामिनम् "अध" अथ अनन्तरं "त्यं" तं "तुर्वशं" तुर्वश-नामानं राजानं दिवोदास-शत्रुं "यदुम्" यदु-नामकञ्च राजानमवाहन्। [अत्रापि सोमरसं पीत्वा मत्तः सन्निन्द्रः सर्वमेतदकार्षीदिति सोमरसे कर्त्तृत्वमुपचर्यते॥ २॥

अथ तृतीया।

१ २ ३ १ २　३ १र　१र　　३ १ २
परिनो अश्वमश्वविद्गोमदिन्दो हिरण्यवत्।
१ १　३ २ ३ १ २
क्षरासहस्रिणीरिषः॥ ३ ¶॥ ६

हे सोम! "अश्ववित्" अश्वस्य लम्भकः त्वं "नः" अस्माकम् "अश्वं" "गोमत्" गोयुक्तं "हिरण्यवत्" हिरण्योपेतं पश्वादि-

---

* ऋ० वे० ७, १, १८, २।

† 'सद्यः—सद्यादेव'—इति वि०।

‡ 'इत्था—इदानीम्'—इति वि०।

¶ ऋ० वे० ७, १, १८, ३।

धनञ्च "परि क्षर"। अपिच "सहस्रिणीः" बहूनि* "इषः" अन्नानि क्षर॥

"परिनः"-"परिणः"—इति पाठौ॥ ३॥ ६

अथ तृचात्मके द्वितीय-सूक्ते—

तत्र प्रथमा।

३ १ २ ३ २उ ३ २ ३ १२
अपघ्नन्पवतेमृधोपसोमोअराव्णः।

२ ३ १ २ ३ २
गच्छन्निन्द्रस्यनिःकृतम् †॥ १ ‡॥

"सोमः" "मृधः" हिंसकान् शत्रून् "अपघ्नन्" मारयन् "अराव्णः" सक्तौ सत्यां धनानामदातॄंश्च "अप" घ्नन्¶ "इन्द्रस्य" "निष्कृतं" स्थानं "गच्छन्" प्राप्नुवन् "पवते" धारया क्षरति॥ १॥

अथ द्वितीया।

३१ २ ३ १र २र३१२ ३ १र २र
महोनोरायआभरपवमानजहीमृधः।

१ २ ३ २३१२
रास्वेन्दोवीरवद्यशः॥ २ §॥

* 'सहस्रिणीः—सहस्रसम्मिता इषः अन्नानि'—इति वि०।

† "निष्कृतम्"—इति ख० पु० मु० पु० पाठः।

‡ छ० आ० ६, १, २, १४ ( २भा० १९४० )=ऋ० वे० ७, १, २२५।

¶ अपेत्युपसर्गदर्शनात् घ्नन्नित्यस्यावृत्तिः।

§ ऋ० वे० ७, १, २३, १।

हे "पवमान!" "इन्दो" सोम! "नः" अस्माकं "महः" महान्ति "रायः" धनानि "आ भर" आहर "मृधः" हिंसकान् शत्रूंश्च "जहि"* मारय "वीरवत्" पुत्राद्युपेतं "यशः" कीर्त्तिञ्च "रास्व" अस्मभ्यं देहि ॥ २ ॥

अथ तृतीया ।

१ २   ३१२ २उ   ३ २ ३ १ २ ३ १ २
नत्वाशतञ्चनह्रुतोराधोदित्सन्तमामिनन् ।
१ २ ३ १ २ ३ १ २
यत्पुनानोमखस्यसे ॥ ३ † ॥ ७

हे सोम! "राधः" धनं‡ "दित्सन्तम्" आदातुमिच्छन्तं "त्वा" त्वां "शतञ्चन" बहवोऽपि "ह्रुतः" हिंसकाः शत्रवः¶ "न आमिनन्" न हिंसन्ति। कदा? इत्यत्राह—"यद्" यदा "पुनानः" पूयमानः त्वं "मखस्यसे" धनं धातुमिच्छसि§ ॥३॥७

अथ तृचात्मके तृतीय-सूक्ते—

प्रथमा ।

२ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अयापवस्वधारयाययासूर्यमरोचयः ।
३ १र २र ३ २
हिन्वानोमानुषीरपः ॥ १ ‖ ॥

---

* संहितायां "जही"—इति दीर्घान्तं श्रूयते, द्व्यच इति (६,३,१३५) मन्त्रे दीर्घः।

† ऋ० वे० ७, १, २३, २ ।

‡ 'राधः—धनस्य'—इति वि० ।

¶ 'ह्रुतः—परधनहीनाः'—इति वि० ।

§ 'मखस्यसे—धनधनमये यज्ञं त्वं यदा करोषि'—इति वि० ।

‖ छ० आ० ६, १, १, ७ (२भा० ५०४०)=ऋ० वे० ७, १, २१, १ ।

हे सोम ! "मानुषीः" मनुष्याणां हितानि "अपः" उदकानि "हिन्वानः" प्रेरयन् त्वं "यया" "धारया" "सूर्य्यम्" "अरोचयः" प्रकाशयसि तया "अया" अनया धारया "पवस्व" चर ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
अयुक्तसूरएतशम्पवमानोमनावधि।

३ १ २ ३ १ १
अन्तरिक्षेणयातवे ॥ २ * ॥

"पवमानः" पूयमानः सोमः "मनावधि" मनुर्मनुष्यस्तस्मिन् मनुष्यार्थं इत्यर्थः। "अन्तरिक्षेण" "यातवे" गन्तुं "सूरः" प्रेरकस्यादित्यस्य "एतशम्" [अश्वनामैतत् ( निघ० १, १४, १० )] अश्वं "अयुक्त" युङ्क्ते ॥ २ ॥

अथ तृतीया।

२ १उ ३ २ ३ २ ३ १ २ ३ १ १
उतत्याहरितोरथेसूरोअयुक्तयातवे।

२ ३ ३ १ २ ३ २
इन्दुरिन्द्रइतिब्रुवन् † ॥ ३ ‡ ॥ ८

"उत" अपिच "इन्दुः" सोमः "इन्द्र इति ब्रुवन्" "त्याः"

* ऋ० वे० ७, १, २१, ३।

† "ब्रुवन्"—इति स० पु० पाठः।

‡ ऋ० वे० ७, १, १, १, ४।

ताम् "हरितः" हरितवर्णान् अश्वान् "सूरः" सूर्य्यस्य "रथे" "यातवे" गन्तुम् "अयुक्त" युनक्ति* ॥

"रथे"-"द्यम"—इति पाठौ ॥ ३ ॥ ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य पञ्चमः खण्डः† ॥ ५ ॥

---

अथ षष्ठे खण्डे‡—

अग्निंवइति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

३ १ २ ३ २ ३ १ २ ३ २ १
अग्निंवोदेवमग्निभिःसजोषा

१ २ ३ १ २ ३ १ २
यजिष्ठन्दूतमध्वरेकृणुध्वम् ।

१२ २ ३ १ २ ३ २ ३
योमर्त्त्येषुनिध्रुविर्ऋतावा

१ २ ३ १ २ ३ २
तपूर्मूर्द्धाघृतान्नःपावकः ॥ १ ¶ ॥

---

* 'एतदुक्तम्भवति—यदा सोमस्य इन्द्रस्य चाह्वानं क्रियते तदा सूर्यो रथे नियुक्तः स्यात् यातवे गमनाय'—इति वि० ।

† 'उक्तं वक्ष्यमाणम्'—इति वि० ।

‡ 'इदानीमाख्यानि'—इति वि० ।

¶ य० वे० १५, ६१=ऋ० वे० ५, १, ३, १ ।

हे देवाः! "वः" यूयं "देवं" द्योतमानम् "अग्निम्" "अध्वरे" कौटिल्य-रहिते यज्ञे "दूतं" "कृणुध्वं" कुरुत। कीदृशम्? "अग्निभिः" अन्यैः "सजोषाः" सजोषसम् [ द्वितीयार्थे प्रथमा ( ३, १, ८५ ) ] "यजिष्ठं" यष्टृतमं* "यः" अग्निः देवोऽपि सन् "मर्त्तेषु" "निध्रुविः" नितरां ध्रुवस्तिष्ठति। कीदृशः? "ऋतावा" यज्ञवान् सत्यवान् वा "तपुर्मूर्द्धा" तापकं तेजः† "घृतान्नः पावकः" शोधकं तमग्निं दूतं कृणुध्वमिति योजना॥१

अथ द्वितीया।

१ ३ २ ३ १र २र ३ २
प्रोथदश्वोनयवसेविष्यन्

५ २ ३ २ ७ १ २ ३ १ २
यदामहःसंवरणाद्व्यस्थात्।

१ २ ३ २ ३ १ २ ३ १र
आदस्यवातोअनुवातिशोचि

१ २र ३ १ २ ३ १ २
रधस्मतेव्रजनङ्कृष्णमस्ति ॥ २ ‡ ॥

"यवसे" घासे "अविष्यन्" भक्षयन्¶ "प्रोथत्" शब्दं कुर्व्वन् सञ्चरन् वा "अश्वो न" अश्व इव "महः" महतः "संवर-

* 'यजिष्ठं—यजनीयम्'—इति वि०।

† 'तपुः—तापनशीलः; मूर्द्धा—प्रधानभूतः'—इति वि०।

‡ ऋ० वे० ५, १, ३, २।

¶ 'यवसे—सन्निधानभूते। अथवा द्वितीयार्थे सप्तमी। यवसमन्नमविष्यन् भक्षयन्'—इति वि०।

णात्" निरोधात् दावरूपोऽग्निः "यदा" "व्यस्थात्" संवृतेषु वृक्षेषु वितिष्ठते, "आत्" तदा "अस्य" अग्नेः "शोचिः" अर्चिः "अनु वातः वाति"। अथ प्रत्यक्षस्तुतिः—"अध" अथानन्तरं हे अग्ने! "ते" तव "व्रजनं" वर्त्म "कृष्णमस्ति"। "स्म"—इति पूरणम् ॥ २ ॥

अथ तृतीया।

१ २र ३ १ २ ३ २उ
उद्यस्यतेनवजातस्यवृष्णो-

३ १ २ ३ १ २ ३ २
ग्नेचरन्त्यजराइधानाः।

२ ३ १ २ ३ १ ३ १ २ ३
अच्छाद्यामरुषोधूमएषि

२ ३ १ २ ३ १ २ ३ २ ३ १
सन्दूतोअग्नईयसेहिदेवान् ॥ ३ * ॥ ९

हे "अग्ने!" "नवजातस्य" नूतन-प्रादुर्भूतस्य "वृष्णः" वर्षितुः "यस्य" "ते" तव "अजरा" जरा-रहिता ज्वाला "इधानाः" इध्यमाना या "उच्चरन्ति" उद्गच्छन्ति। हे "अग्ने!" "अरुषः" आरोचमानः "धूमः" धूमयुक्तः "दूतः" त्वं "द्या-मच्छ"† द्युलोकं प्रति "समेषि" सम्यग् गच्छसि, पश्चात् तत्र-त्यान् "देवान्" इन्द्रादीन् "ईयसे हि" प्राप्नोषि खलु, [ यद्वा, हे

* ऋ० वे० ५, १, ३, ३।

† 'अच्छ—आप्तुम्'—इति वि०। संहितायाम् "अच्छा"—इति दीर्घश्च श्रूयते, तत्र निपातस्य चेति दीर्घः।

अग्ने ! त्वदीयो यो धूमः द्युलोकं प्रति एषि गच्छति, पुरुषव्यत्ययः ; त्वमपि देवान् प्राप्नोषि ॥

"एषि"-"एति"—इति पाठौ ॥ २ ॥ ९

अथ तमिन्द्रमिति त्र्यचात्मकं द्वितीयं सूक्तम्,*

तत्र प्रथमा ।

१२ १२ ३ २ ३ २ ३ १ २
तमिन्द्रंवाजयामसिमहेवृत्रायहन्तवे ।
१ २२ ३ १ २
सवृषावृषभोभुवत् ॥ १ † ॥

यजमाना आहुः—"तं" पूर्वोक्तम् "इन्द्र" "वाजयामसि" वाजयामः सोमेन स्तुतिभिः "वाजवन्तं" बलवन्तं कुर्मः । किमर्थम् ? "महे" महान्तं "वृत्राय" अपामावरकं वृत्रासुरं "हन्तवे" हन्तुं सोम-पानेन मत्तः स्तुतिभि र्वा स्तुतः सन् वृत्रहन्तवे [ वाजयामसि—वाजवन्तं करोतीत्यर्थे "तत्करोतीति ( ३, १, २५ वा० ) णिच्, "णाविष्ठवत् ( ३, १, २५वा० )"—इति णेरिष्ठवद्भावात् "टेः ( ६, ४, १५५ )"—इति टि-लोपः, "विन्मतोर्लुक् ( ५, ३, ६५ )"—इति मतुपो लुक् ]। "वृषा" धनानां सेक्ता दाता "सः" इन्द्रः "वृषभः" अस्माकं स्तोतॄणां सोमस्य दातॄणां धनादि-सेचको दाता "भुवत्" भवतु ॥ १ ॥

---

* 'मैत्रावरुणमाज्यम्'—इति वि० ।

† छ० आ० २, १, ३, ५ ( १भा० २९९पृ० )=ऋ० वे० ६, ६, २२, १ ।

अथ द्वितीया।

२ ३ १२ २२ ३ १२ २२ ३ १२ २२ ३ २
इन्द्रःसदामनेकृतओजिष्ठःसबलेहितः।
३ ७ ३ २उ ३ २
द्युम्नीश्लोकीससोम्यः॥ २ *॥

"सः" इन्द्रः "दामने" स्तोतृभ्यः धनादि-दानायैव "कृतः" प्रजापतिना सृष्टः। किञ्च "ओजिष्ठः" ओजस्वितमः "सः" एवेन्द्रः "बले" बलवति सोमे प्रजापतिना सृष्टिकाले निहितः सोम-पानार्थञ्च निहित इत्यर्थः। "द्युम्नी" ["द्युम्नं द्योततेर्यशो वान्नं वेति (निरु० नै० ५, ५) यास्केनोक्तत्वात्] यशस्वी अन्नवान् वा अतएव "श्लोकी" श्लोकः स्तुतिः तद्वान्† "सः" इन्द्रः "सोम्यः" सोमार्हो भवति‡॥

"बले"-"मदे"—इति पाठौ॥ २॥

अथ तृतीया।

३ २उ ३ १२ २२ ३ १ २ ३ १ २
गिरावज्रोनसम्भृतःसबलोअनपच्युतः।
३ २ ३ १२ २२
ववक्षउग्रोअस्तृतः॥ ३ ¶॥ १०

* ऋ० वे० ६, ६, २२, ३।

† 'श्लोकी—श्लोकैर्मन्त्रैर्योऽतिशयो गीयते सः श्लोकी'—इति वि०।

‡ 'सोमैर्यः सम्भज्यते स सोम्यः'—इति वि०। "सोममर्हति यः"—इति] पा० ४, ४, १३७।

¶ ऋ० वे० ६, ६, १०, ४।

"गिरा" स्तुति-लक्षणया वाचा स्तोतृभिः "सम्भृतः" उत्पादितः तीक्ष्णीकृतः। तत्र दृष्टान्तः—"वज्रोन" वज्र आयुधं तत्कर्त्तृभिः शितधारो यथा भवति तीक्ष्णीक्रियते तद्वत् स्तोतृभिः स्तुत्या सम्भृतः, अतएव "सबलः" बल-सहितः तस्माद् "अनपच्युतः" परैरप्रच्युतः अनभिगतइत्यर्थः, तादृशः "उग्रः" महान् "अस्तृतः" युद्धे शत्रुभिरहिंसितइन्द्रः "ववक्षे" स्तोतृभ्यो धनादिकं वोढुमिच्छति॥

"उग्रः"-"ऋष्वः"—इति पाठौ॥ ३॥ १०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य षष्ठः खण्डः* ॥ ६॥

---

अथ सप्तम-खण्डे†—

अध्वर्यो अद्रिभिरिति तृचात्मकं प्रथमं सूक्तम्,‡

तत्र प्रथमा¶॥

१ २ ३ १ २ ३ १र २र २ २ ३ १ २
अध्वर्यो अद्रिभिः सुतꣳ सोमम्पवित्र आनय।

३ १ २ ३ १ २
पुनाहीन्द्राय पातवे॥ १ ¶॥

---

* 'इन्द्रे अग्नानमोद्वदित्यैन्द्राग्नम्'—इति वि०। अतोऽनन्तरं विनियोक्ष्यमाणोति तदभिप्रायः। अतश्च तदिहैव द्वितीये(९,१, ९,१ = ३भा० ३११पृ०)प्रपाठके।

† 'उक्तान्याख्यानि, इदानीं माध्यन्दिनः पवमानः'—इति वि०।

‡ 'आवपप्रभृतीनि सामानि ब्राह्मणेनोक्तान्यार्षाणि—इति वि०।

¶ ऋ० आ० ६, १, २, ३ (२ भा० ५०७पृ०) = ऋ० वे० ७, १, ८, १।

हे "अध्वर्यो !" "अद्रिभिः" ग्रावभिः "सुतम्" अभिषुतं "सोमं" "पवित्रे" "आनय" प्रापय। एतदेव दर्शयति— "इन्द्राय" इन्द्रस्य "पातवे" पानाय "पुनाहि" पुनीहि पावय॥

"आनय"-"आसृज"—इति पाठौ, "पुनाहि"-"पुनीहि"—इति च॥ १॥

अथ द्वितीया।

१ २ १ २ ३ १ २ १ २ ३ क २ र
तवत्यइन्दोअन्धसोदेवामधोर्व्याशत।

१ २ ३ १ २
पवमानस्यमरुतः॥ २ *॥

हे "इन्दो" सोम! "तव" सम्बन्धिनं "मधोः" मदकरस्य "पवमानस्य" पूयमानम् "अन्धसः" अन्नं [ तत्र कर्मणि षष्ठी (२, १, २५)] "त्ये" ते इमे "देवाः" इन्द्रादयो "मरुतश्च"† एवम्भूतमन्नं "व्याशत" व्याप्नुवन्तीत्यर्थः॥

"व्याशत"-व्यश्नुत"—इति पाठौ॥ २॥

अथ तृतीया।

३ १ ३ १ २ ३ २ उ ३ १ २ ३ १ २
दिवःपीयूषमुत्तमꣳसोममिन्द्रायवज्रिणे।

१ २ ३ १ २
सुनोतामधुमत्तमम्॥ ३ ‡॥ ११

---

* ऋ० वे० ७, १, ८, २।

† 'मरुतः—मरुतो देवाः अथवा मरुतः रश्मयः'—इति वि०।

‡ ऋ० वे० ७, १, ८, ३।

हे अध्वर्यवः ! यूयं "मधुमत्तमम्" अतिशयेन माधुर्योपेतं "दिवः" द्युलोकस्य "पीयूषम्" अमृतभूतम् "उत्तमं" श्रेष्ठं "सोमं" "वज्रिणे" वज्रवते "इन्द्राय" "सुनोत"* अभिषुणुत ॥ ३ ॥ ११

॥ वैरूपम्† ॥ अध्वर्य्यो२३४आ । द्रिभायिःमू३ता३म । सोमंपार२३४वी । त्रा आ१नाया२ । पुना२३ । हीन्द्रा३४ औहोवा । यपात्तवे२३४५ ॥(१) तवत्या२३४ई । दो आन्धा३सा३ः । देवा२मा२३४घोः । वाया१श्राता२ । पवा२३ । माना३४औहोवा । स्यमरुता२ ३ ४ ५ः ॥(२) दिवःपी२३४यू । षमुत्ता३मा३म् । सोमा२मा२३४ईन्द्रा । यावज्रायिणा२यि । सुनो२३ । तामा३४औहोवा । धुमत्तमा२३४५म्(३) ॥ २० ‡ ॥ [१]

---

* संहितायां "सुनोता"—इत्याकारान्तं श्रूयते, तत्र द्व्यचोतस्तिङ इत्येमकास्तिङ इति (६, ३, १३५) योगविभागाद्दीर्घः ।

† "गायत्री वैरूपम्"—इति ख० पु० पाठः ।

‡ ऊ० गा० ४प्र० १ख० २०सा० ।

॥ आप्तभार्गवम् ॥ अध्वर्योअद्रि। भिःसूइताम्। सोमम्पवाइयि। त्राआरनार२३४या। पुनाह्वाश्यिन्द्रा २। यपा३। ता२३४वो६हायि ॥(१) तवत्यइन्दो। अन्धाइसः। दायिवामधोइः। वायार्श्रा२३४ता। पवा माश्नार२। स्यमा३। रू२३४तो६हायि ॥(२) दिवःपी यूषम्। उत्ताइमाम्। सोममिन्द्रा३। यावारञ्जार२३ ४यिणायि। सुनोताश्मार२। धुमा३। ता२३४ मो ६ हायि(३) ॥ १ * ॥ [२]

॥ मार्गीयवम् † ॥ अध्वौहोवा। र्योआर२। द्रिभा यिःसूर२३४ताम्। सोमम्पवि। त्राआनाश्यार२। पुना। हा। औइहोयि। द्री२३४न्द्रा। या२पा२३४औहोवा। ए३। तव२३४५ ॥(१) तवौहोवा। त्याआरयि। दो

* ऊ० गा० ४प्र० २ख० १सा०।
† "मार्गीयवाद्यम्"—इति ख० पु० पाठः।

१० ५ १२२ १ २ १ २ १ २
अन्धा२३४सा: । देवामधोः । वियाशा१ता२ । पवा ।

२ १ ३ ५ १ ३ ५२ २
द्दा । औ३होयि । मा२३४ना । स्या२मा२३४औद्दो

२ १ ११११ १२ १ २ १
वा । ए३ । हृता२३४५: ॥(२) दिवौद्दोवा । पीयू२ ।

१२३ ५ १२ २ २ १ २
षमुत्ता२३४माम् । सोममिन्द्रा । यवाज्रा१यिणा२यि ।

१२ २ १ ३ ५ १ ३
सुनो । द्दा । औ३होयि । ता२३४मा । धू२मा२३४

५२ २ २ १ ११११
औद्दोवा । ए३तमा२३४५म्(३) ॥ २ * ॥ [३]

२ २ २ १२
॥ सौमित्रम् ॥ अध्वर्यो अद्रिभि:सुता३मे । सोम

१ २ २ १ १ २
म्पवित्रे । आ२१२३ । नया३४३ । पू२३ना । औन्द्रा

१ ४ ५ ४ ५ २ २
२ओ२३ । यपोवा । ता५ा६द्दायि ॥(१) नवत्यइन्दो

२ १२२ २ २ २
अन्धसा३ए । देवामधीर्वि । आ२१२३ । शता ३ ४ ३ ।

१ २ २ १ ४ ५ ४ ५
पा२३वा । माना२ओ२३ । स्यसोवा । हृ५ता६ द्दा

२ २ २ १ १२ २१
यि ॥(२) दिवःपीयूषमुत्तमा३मे । सोममिन्द्राय । वा

* ऊ० गा० ४प्र० २ख० २सा० ।

२१२३। जिणा३४३यि। सूर३नो। तामा२औ२३।
भुमोवा। ता५मोई२वायि(३) ॥ ३ * ॥ [४]

॥ ऐटतम् ॥ अध्व। एआध्वा। यौअद्रि। भा३
यिः। द्रा२यिभा२३४औहोवा। सू२३४ताम्। सोमा
आ२३४वो। अभा३। आ२भा२३४औहोवा। ना२३
४या। पुनाहा२३४यिन्द्रा। यपा३। या२पा२३४औ
होवा। ता२३४वे ॥(१) तव। एतावा। त्यइन्दो। आ३।
दो२आ२३४औहोवा। धा२३४साः। देवामा२३४धोः।
वियाइ। वा२या२३४औहोवा। ग्रा२३४ता। पवामा
२३४ना। स्यमा३। स्या२मा२३४औहोवा। रू२३४
ताः ॥(२) दिवः। एदायिवाः। पीयूषम्। ऊ३। पा
२मू२३४औहोवा। ता२३४माम्। सोमामा२३४यिन्द्रा।

* ऊ० गा० ४प्र० २ख० ३गा०।

३ २ १ ३ ५र र ३ ५ २ ३

यवा३ । या२वा२३४औहोवा । औ२३४णो । सुनोता

५ ३ २ १ ३ ५र र ३

२३४मा । धुमा ३ । धू२मा२३४औहोवा । ता २ ३ ४

५

माम्(३) ॥ ४ * ॥ [५]

१ र १ १

॥ धुरासाकमश्वम् ॥ अध्वर्य्या आ३ । हौ३हो३१ । द्रि

२ ऽ २ र २ ऽ

भिःसुता३म् । हौ३हो३१यि । सोमम्यवा३यि । हौ३

२ १र १ ऽ १ र र २

हो३१ । त्रआनया३ । हौ३हो३१यि । पुनाहीन्द्रा ३ ।

ऽ १ र २ ऽ २

हौ३हो३१ । यपातवा३यि । हौ३हो३१२३४५ई । डा ॥(१)

१ २ ऽ १ र १ ऽ र

तवत्यआ३ । हौ३हो३१ । दोअन्धसा३ः । हौ३हो३१

यि । देवामधो३ः । हौ३हो३१यि । वियाश्रता३ । हौ

र र २ ० २ र १ ऽ

२ र ऽ १ २

३हो३१यि । पवमाना३ । हौ३हो३१ । स्यमक्ता:३ ।

ऽ १ १ र २ ऽ

हौ३हो३१२३४५ई । डा ॥(२) दिवःपीयू३ । हौ३हो३

२ ऽ २ र २

१ । षमुत्तमा३म् । हौ३हो३१यि । सोममिन्द्रा ३ ।

* ऊ० गा० ४प्र० २अ० ४सा० ।

हौ३हो३१ । यवज्ञिणा३यि । हौ३हो३१यि । सुनोतामा
३ । हौ३वो३१ । धुमत्तमा३म् । हौ३हो३१२३४५ई ।
डा(३) ॥ ५ * ॥ [६]

॥ विलम्बसौपर्णम् ॥ अध्वर्योअद्रिभिःसुतम् । इय
इयाहायि । सोमम्पवित्रआ । हा३हा३यि । ना२३४
या । पूना३उवा३ । हा२यिन्द्रा२३४औहोवा । यपा
तवे२३४५ ॥(१) तवत्यइन्दोअन्धसः । इयदियाहायि ।
देवामधोविंया । हा३हा३यि । प्रा२३४ता । पावा३
उवा३ । मा२ना२३४औहोवा । स्यमऋता२३४५ः ॥(२)
दिवःपीयूषमुत्तमम् । इयदियाहायि । सोममिन्द्रायवा ।
हा३हा३ । ज्ञा२३४यिणायि । सूना३उवा३ । ता२मा
२३४औहोवा । धुमत्तमा२३४५म्(३) ॥ ६ † ॥ [७]

---

* ऊ० गा० ४प्र० २ख० ५गा० ।

† ऊ० गा० ४प्र० २ख० ६गा० ।

२ १ २ १ २ ३
॥ सौपर्णम् * ॥ अध्वर्य्य ओवा। द्रायिभायिः सू२३४
५ २र १ २१ ७ ३ ५ १ १
ताम्। सोमाम्पवायि। चआ२ना२३४या। पू२ना।
२ १२र १ २ ४५ २
द्दा२३यिन्द्रा। यापातवा। औ३द्दोवा ॥(१) तवत्य
१ २ १ २३ ५ २र१ ११ ७ ३
ओवा। द्दो अन्धा२३४सा:। देवामधाः। विया२शा
५ १ १ १ १ २ १ २
२३४ता। पा२वा। मा२३ना। स्यामकृता। औ३
४ ५ २ र १ २ १ २ २ ६ १र
द्दोवा ॥(२) दिवःपीयोवा। पामुत्ता२३४माम्। सो
१ २ १ ७ ३ ५ १ १
मामिन्द्रा। यवा२ञा२३४यिणायि। सू२नो। ता२३
२ १२ १ ४ ५ ४
मा। धूमत्तमाम्। औ२३द्दोवा। द्दो ५ ई। डा(३)
॥ १२ † ॥ [८]

१ २र १ २१ १
॥ रोहितकुलीयोत्तरम् ॥ अध्वर्य्यो अद्रिभायिः। सु
१र २ १र १ १ १
ता२म्। सोमम्पविचआना२३या। पूना२द्दायिन्द्रा२१।
२ १ ५ ४ ५ १ २ १ १र १
यपो२ ३ ४ वा। ता५वो६द्दायि ॥(१) तवत्यइन्दोआ।

* "ऐडसौपर्णम्"—इति ख० पु० पाठः।

† ऋ० गा० १६प्र० २ख० १३गा०।

२ १र२ र २१र २ १ १
धसा२ः । देवामधोर्विंयाशा२३ता । पावा२माना२३ ।

२ १ ५ ४ ५ २१ २र१र२१ २
स्यमो२३४वा । रू५तो६हायि ॥(२) द्विवःपीयूषम् । स

१र र २१ २ १ १
मा२म् । सोममिन्द्रायवज्रा२३यिणायि । सूनो२तामा

२ १ ५ ४ ५
२३ । धुमो२३४वा । ता५मो६हायि(३) ॥ १४ * ॥ [९] ११

धर्त्तादिवइति तृचात्मकं द्वितीयं सूक्तम् ।†

तत्र प्रथमा ।

२ २ ३ २ ३ ० २ ३
धर्त्तादिवःपवतेकृत्व्योरसो

१ २ ३ १ २ ३ २ ३ १ २
दक्षोदेवानामनुमाद्योनृभिः ।

१ १ २ २उ ३ १र २र २
हरिःसृजानोअत्योनसत्वभि

२ ३ १ २ ३ २
र्वृथापाजांऽसिकृणुषेनदीष्वा ॥ १ ‡ ॥

---

* ऊ० गा० १६प्र० १ख० १४सा० ।

† 'अभिसोमासआयवइति बृहत्यः, धर्त्तादिवो जगत्यः त्रिष्टुभो रूपेण'—इति वि० । यथा पूर्वमभिसोमासइति (२, १, ९, १=३भा० ४०१पृ० ) तथैषाम् धर्त्ता दिवइति भावः ।

‡ छ० आ० ६, २, २, ५ (२भा० १८६पृ० ) = ऋ० वे० ७, २, १, १ ।

"धर्त्ता" सर्वस्य धारकः सोमः "दिवः" अन्तरिक्षात् अन्तरिक्षस्थितात् दशापवित्रात् "पवते" पूयते। कीदृशः सोमः? "कृत्व्यः" कर्त्तव्यः शोध्य इत्यर्थः। "रसः" रसात्मकः। "देवानां" "दक्षः" बलप्रदः [ यद्वा, दक्षः प्रवर्द्धनीयो देवानामर्थाय ]। तथा "नृभिः" नेतृभिः ऋत्विग्भिः "अनुमाद्यः" अनुमादनीयः स्तुत्यो वा। शेषः प्रत्यक्षकृतः। "हरिः" हरितवर्णः। "सत्वभिः" प्राणिभिः अस्मदादिभिः "सृजानः" सृज्यमानः "अत्यो न" अश्व इव [स यथा शिक्षितोऽनायासेन गच्छति तद्वत्] "वृथा" अप्रयत्नेन "पाजांसि" बलानि स्वीयान् "कृणुषे" कुरुते "नदीषु" वसतीवरीषु ताभिरित्यर्थः॥

"कृणुषे"-"कृणुते"—इति पाठौ॥ १॥

अथ द्वितीया।

२ ३ १ २ ३ १ २ ३ १ २ ३
शूरो नधत्त आयुधा गभस्त्योः

२ १ २ ३ १ र २ र
स्वाऽ३ः सिषासन्रथिरो गविष्टिषु।

१ २ ३ १ २ ३ १ २ ३ २ ३
इन्द्रस्य शुष्ममीरयन्नपस्युभि

१ २ ३ १ २ ३ १ २
रिन्दुर्हिन्वानो अज्यते मनीषिभिः॥ २ *॥

अयं सोमः "गभस्त्योः" हस्तयोः "आयुधा" आयुधानि

---

* ऋ० वे० ७, ३, १, २।

"शूरो न" शूर इव "धत्ते" धारयति,* "स्वः" स्वर्गं सुख-साधनं धनं वा "सिषासन्" सम्भक्तुमिच्छन् "रथिनः" रथवान् [ रथात् इन-प्रत्ययः ] "गविष्टिषु" यजमानस्य गवामेषणेषु सत्सु यजमानोत्साहं गो-सम्भजनाय रथवानित्यर्थः । "इन्द्रस्य" "शुष्मं" बलम् "ईरयन्" प्रेरयन् "इन्दुः" सोमः देवः "अपस्युभिः" कर्मेच्छुभिः† "मनीषिभिः" मेधाविभिः ऋत्विग्भिः "हिन्वानः" प्रेर्यमाणः "अज्यते"‡ गोभिः ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ ३ १ २
इन्द्रस्यसोमपवमानऊर्मिणा

३ १ २ ३ २ ३ १ २
तविष्यमाणोजठरेष्वाविश ।

१ २ ३ १ २ २ ३ १ २
प्रनःपिन्वविद्युदभ्रेवरोदसी

३ १ ३ २ ३ १ २ ३ १ २
धियानोवाजाँउपमाहिशश्वतः ॥ ३ ¶ ॥ १२

हे "सोम !" "पवमान" पूयमान ! त्वं "तविष्यमाणो" वर्द्धिष्यमाणः§ सन् "इन्द्रस्य" "जठरेषु" "ऊर्मिणा" प्रभूतया

---

* 'असि-परशु-पाश-प्रभृतीनि यथा शूरः धारयति तद्वत् सोमः धारयतीति कुश-कुश-पश-असमान्यायुधानि गमस्तेः'—इति वि० ।

† 'अपस्युभिः—अपरच्छद्भिः ऋत्विग्भिः'—इति वि० ।

‡ 'अज्यते—अञ्ज क्षेपणे, क्षिप्यते'—इति वि० ।

¶ ऋ० वे० ७, ३, १, ३ ।

§ 'तविष्यमाणः—सूयमानः'—इति वि० ।

धारया "आ विश" जठर-प्रदेशस्य बाहुल्यात् बहुवचनम्* "नः" अस्मदर्थं "विद्युत्" "अभ्रेव" अभ्राणीव सा यथा अभ्राणि दोग्धि तद्वत् "प्र पिन्व" धुक्ष "रोदसी" द्यावापृथिव्यौ† किञ्च "धिया" कर्मणा‡ "नः" अस्मभ्यं "शश्वतः" [ बहुनामैतत् ( निघ० ३, १, ५) ] बहून् "वाजान्" अन्नान् "उप" समीपे "माहि" निर्माहि ॥

"माहि"-"मासि"—इति पाठौ, "नः"-"न"—इति च ॥३॥१२

२ र १ २ १
॥ उद्वद्भार्गवम् ॥ धर्त्तादायिवा२३ः। पवतायिका

२र १र १र १ २र १
२३। त्वीयोरसाः। दत्तोदायिवा२३। नामनूमा२३।

र १र १ १ २र १
दीयोनूभायिः। हरिःसार्ज्जा२३। नोअतायियो२३।

२र १ २ र १ १ १ २र
नासत्वभायिः। वृथापाजा२३। सिक्रणूपा२३यि। ना

र १ १र र १ १ र १ २र
दीषुवा३१उ ॥(१) शूरोनाधा२३। तंआयूधा२३। गा

१ १ १ २ १ २र १
भस्तियोः। सुवःसायिषा२३। सन्नथायिरो२३। गाविष्टि

---

* 'जठरेषु आविश'--सप्तम्या बहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम् ।

† 'प्र प्र पिन्व—पुनःपुनः पूरय दीपयास्मान् विद्युदभ्रे यथा अभ्राणीव रोदसी द्यावापृथिवी आपय'—इति वि० ।

‡ धिया—बुद्ध्या—इति वि० । "धीः"—इति निघण्टौ कर्मनामस्वेकविंशतितममिदम् ( २, १ ) ।

२ १ २ र १ ३र १
षू। इन्द्रस्याशू२३। यमीरायार३न्। आपस्तुभायिः।
१ १ १र १ २र १र
इन्दुर्द्धायिन्वा२३। गोअज्यातार३यि। मानीषिभा३१
२ १ २ १ २र १र
उ ॥(२) इन्द्रस्यासो२३। मपवामार३। नाऊर्मिणा।
२ १ १र १ २र १र २
तविष्यामा२३। ओजठारार३यि। षूआविशा। प्रनः
१ २ १ २र १र १ र १
पायिन्वा२३। विद्युदाभ्रे२३। वारोदसायि। धियानो
१र १ २र १ र १ १ १ १
वा२३। जा०उपामा२३। हीभस्वता३१उवा२३४५ (३)

॥ १४* ॥ [१]

२ १ र २ र १
॥ कावम् ॥ धर्त्तावा। दिवःपवतेक्रा। त्वियोरा
१र र र र २ र १ १
सा२ः। दक्षोदेवानामनुमा। दियोन्द्दभा२यिः। द्दरिः
र र २ १ १ २ ४ ५
सृजानोअतियो। नसत्वाभा२३यिः। वार्था३ पाजा।
२ १ १ २ ४ २र १
सिक्रणूषा२३यि। नादा३यिषूवा६५६ ॥(१) शूरोवा।
र २ १ १ र
नधत्तआयुधा। गभस्तायो२ः। स्वःसिषासन्वथिरो।

---

* ऊ० गा० ४प्र० २ख० १४सा०। "स्वारकावम्"—इति ख० पु० पाठः।

१ १ ४ २ १
गविष्ठायिषू२ । इन्द्रस्यशुष्ममीरयान् । अपस्युभार२३यि: ।
१ २ ४ ५ १र १ १ १ ४
आयिन्द्२३हौयिन्वा । नोअज्यानार२३यि । मानाउयिषा
२ १ ४ २र
पृयिभाइ५६यि: ॥(२) इन्द्रोवा । स्यसोमपवमा । नऊ
१ १ २र १र१
र्मीयिणा२ । तविष्यमाणोजठराःयि । पुआवायिआा२ ।
१ १र१ १ १ ४ ५
प्रनःपिन्वविद्युदभ्रे । वरोदासार२३यि । धायाउनोवा ।
१र १ १ १ ४
जाउउपामार२३ । हीआाउआपृताइ५६:(३) ॥ १६ * ॥ [२]
४ ५ ४ १ ४र५
॥ यज्ञायज्ञीगम् ॥ धर्त्ताऽ५दि । वा३:पा३वतेका ।
१ र र र२ र १ १ १ १
त्वीयोरसोदक्षोदेवानामनुमा । दौ३योनृ३भायि: । हरा
१ र र र १ १ १
रयि:स्रजानोअत्योमत्व । भिर्वार२३थी । क्रम्मायि । पा
१ १ र ११ १ १ १र
३जा । सायिकृणापेनदार२यिषवाउ ॥(१) आशू । रो
र र र र १ १
नधत्तआयुधागभस्त्योःस्वःसिषासन्यिरो । गा३वायिष्टा
२ १ १ र १
३यिषू । इन्द्रा२स्यशुष्ममीरयन्नपस्यु । भिरार२३यिन्द: ।

---

* ऊ० गा० ६प्र० १ख० १६गा० ।

१ १ २ १ र ३ २
ऊम्माथि। हा३यिन्वा। नोअज्यतेमना२यिषिभाउ॥(२)
१ २ १ र र र र र र
भायिरायि। द्रस्यसोमपवमानऊर्म्मिणातविष्यमाणोजठरा
२ १ २ २ १ १ र र
यि। षू३आवा३यिशा। प्रना२ःपिन्वविद्युदभ्रेवरोद।
र २ १ २ २ १ र
सोधार३या। ऊम्माथि। नो३वा। जा॑उपमाहिशार
३ २ १ १ १
स्वताउ। वा३४५(३)॥ १५ * ॥ [३]

१ २ २ २ र
॥ शाकरम् † ॥ हाउधार्त्ता। दा२३४यि। वःपवते
र १ ३ २ १ ३ २ १ २
कृत्वियोरसा। एह्वियाः। एह्वियाः३४। हाउदाक्षाः।
१ २र र र र १ ३ १ १ ३
दा२३४यि। वानामनुमादियोनृभिः। एह्विया। एह्वि
२ १ १ १ २र र र
या३४। हाउहारीः। सा २ ३ ४। जानोअत्योनसत्व
१ ३ २ १ ३ २ १ २ १
भिः। एह्विया। एह्विया३४। हाउवार्था। पा२३४।
२र र र र १ ३ २ १ ३ २ ५
जा॑सिक्तणुषेनदीषुवा। एह्विया। एह्विया३४। हाउ॥(१)
१ २ १ २ र र र १ ३
हाउप्रूरा। ना२३४। धत्तआयुधागभस्त्योः। एह्वि

* ऊ० गा० १५प्र० १ख० १५सा०। † "शार्गम्"—इति ख० पु० पाठः।

२ १ १ २ १ २ १ २र
या। एहिया३४। हाउस्त्वाः। सा२३४यि। षास

र १ ३ १ १ ३ २ १ २
न्नुथिरोगविष्टिषु। एहिया। एहिया३४। हावायिन्द्रा।

१ २ र १ १ २ १ १ १
स्या२३४। धुक्षमीरयन्नपस्युभिः। एहिया। एहिया

१ १ १ २र र र र
३४। हावायिन्दूः। हा२३४यि। न्वानोअज्यतेमनी

१ १ २ १ ३ २ ५ १
षिभिः। एहिया। एहिया३४। हाउ॥(२) हावायि

२ १ २र र र र १ ३ २
न्द्रा। स्या२३४। सोमपवमानऊर्म्मिणा। एहिया।

१ ३ २ १ २ १ १र र र र
एहिया३४। हाउतावायि। ष्या२३४। माणोजठरेष्वा

१ ३ २ १ ३ २ १ २ १
विश्व। एहिया। एहिया३४। हाउप्रानाः। पा२३४

२ र र र १ ३ २ १ १ २
यि। न्वविद्युदभ्रेमवरोदसी। एहिया। एहिया३४।

१ २ १ १र र र १ ३
धाया। नो२३४। वाजाः५उपमाहिश्रस्वतः। एहि

५ २ ५ ४
हिया३४। हाउ। हो५ई। डा(३)॥२०*॥[४]

३ २ ३ २ ३र ४र ५ १
वासिष्ठम्†॥ उऊवायि। धर्त्ता३४औहोवा। दि

* ऊ० गा० १७प्र० १ख० २०सा०।
† "उऊवायि वासिष्ठम्"—इति ख० पु० पाठः।

२ १ र   २ २ ४र ५   ३ १   ३र ४र ५   १र
वाः। पवते। क्रत्वियोरसाः। दक्षा३४औहोवा। दे

२ १   २र ३ ४र ५   ३ १   ३र ४र ५
वा। ना३मनु। मादियोनृभायिः। हरा३४औहोवा।

१   २ १   १र ३ ४ ५   ३ २   ३र ४र ५
सृजा। नो३मति। योनसत्वआयिः। वृथा३४औहोवा।

१र   २ १   २र   १ २   ४   २र
पाजा। सिह्णु। षे। नदा३यिषू५वा६५६॥(१) प्र

२ ३र ४र ५   १   २ १र   १र ३ ४   ५
रा३४औहोवा। नधा। ता३आयु। धागभस्तियोः।

३ १   ३र ४र ५   १   २ १   १र ३ ४ ५
सुवा३४औहोवा। सिषा। सा३नृयि। रोगविष्टिषू।

३ २   ३र ४र ५   १   २ १   १ ३ ४ ५
इन्द्रा३४औहोवा। स्यष्टू। ष्मा३मीर। यन्नपस्युभा

३ १   ३र ४र ५   १   २र १   २र ३
यिः। इन्द्रू३४औहोवा। हिन्वा। नोअज्य। ते। म

२ ४   ३ १   ३र ४र ५   १
ना३यिषा५यिभा६५६यिः॥(२) इन्द्रा३४औहोवा। स्य

२ १   २र ३ ४र ५   ३ १   ३र ४र ५
सो। मा३पव। मानऊर्म्मिणा। तवा३४औहोवा।

१   २ १   २र ३ ४र ५   ३ १   ३र ४र ५
व्यमा। णो३अठ। रेषुआविशा। प्रना३४औहोवा।

१   २ १   १र ३ ४र ५   ३ १   ३ २
पिन्वा। विद्युद। भ्रंवरोदसायि। उक्षवायि। धिया

१र ४र ५ १र २ १ २र २ १ ४
३४औहोवा। नोवा। जा३उप। मा। हिम्रा३म्रा
५ताई५६:(३) ॥ १६ * ॥ [५]

२ १र २ १ २र १ २र १
॥ वायोरभिक्रदन्† ॥ धर्त्तादिवःपवतेकृत्वियो। द्यो
२ १ र र र र र २ २ २ १
यिरासाः। दक्षोदेवानामनुमादियो१नू३भायिः। हरिः
र र र २ २ २ ३ ५ २
सृजानोअतियोनसा१त्वा३भायिः। वा२३४र्था। पा२३४
५ १ २ १ २ १ २ ४
जा। सायिक्तणुषा३यि। द्दा२३यि। नदा३यिषू५वा६
१र२र१ २१र २र१ २र १ २ १
५६ ॥(१) शूरोनधत्तआयुधागभौ। द्दोस्तायोः। स्वःसि
र र २ २ २ १ र २
षासन्नथिरोगवा१यिष्टा३यिषू। इन्द्रस्यशुष्ममीरयन्नपा१
२ २ २ ५ २ ५ १ २
स्यू३भायिः। आ२३४यिन्दूः। द्दा२३४यिन्वा। नोअ
२ २ १ २ ४
ज्यता३यि। हा२३यि। मना३यिषा५यिभाई५६यिः ॥(२)
१ २ र १२र १२र १ २ १ र र
इन्द्रस्यसोमपवमानऔ। दोर्म्मायिणा। तविष्यमाणो
र २ २ २ १ र २ २ २
जठरेषुआ१वा३यिशा। प्रनःपिन्वविद्युदभ्रेवरो१दा३सा

* ऊ० गा० १३प्र० २ख० १६गा०।

† "वायोरभिक्रन्दः"—इति ख० पु० पाठः।

१ ५ २ ५ १ २ ३ १ १
यि। धा२३४या। नो२३४वा। जा५उपमा३। हा२

२ ४
३। ह्विआ३आ५ताई५ई:(३) ॥ १८ * ॥ [६] १२

अथ प्रगाथरूपे तृतीयसूक्ते†—

प्रथमा।

१२ ३१उ ३ २३क २र १२३१ २
यदिन्द्रप्रागपागुदङ्न्यग्वाहूयसेनृभिः।

१ २ ३ १र २र १ २ ३ १ ३ १ २
सिमापुरूनृषूतोअस्यानवेसिप्रशर्द्धतुर्वशे ॥ १ ‡ ॥

हे "इन्द्र!" "यद्" यदि "प्राक्" प्राच्यां दिशि वर्त्तमानैः [सप्तम्यां प्राक्-शब्दात् विहितस्यास्तातेः¶ "अञ्चेर्लुगिति (५,३,३०) लुक्], यदि वा "अपाक्" प्रतीच्यां दिशि वर्त्तमानैः, यदि वा "उदक्" उदीच्यां दिशि वर्त्तमानैः यद्वा "न्यक्" नीच्यां दिशि अधस्ताद्वर्त्तमानैः ["न्यधी च (६,२,५३)"—इति प्रकृतिस्वरत्वम्, "उदात्तस्वरितयोर्यणः (८,२,४)"—इति परस्यानुदात्तस्य स्वरितत्वम्]; एवम्भूतैः "नृभिः" स्तोतृभिः त्वं "हूयसे" स्व-स्व-कार्य्याय आहूयसे ["हिंसिमश्रेष्ठेन्द्रसिमद्भतिवैश्रेष्ठमाचक्षतइति वाजसनेयकम्]। यद्यप्येवं बहुभिराहूयसे तथापि "अनवे"

---

* क० गा० १३प्र० २ख० १८सा०।

† उक्तो माध्यन्दिनः पवमानः, इदानीं पृष्ठानुच्यन्ते—इति वि०।

‡ ऋ० आ० ३, २, ४, ७ (१भा० ५७३पृ०) = ऋ० वे० ५, ७, २०, १।

¶ "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः"—इति पा० ५, ३, २७।

अनुर्नाम राजा तस्य पुत्रे राजर्षौ "पुरु" बहुलं "नृषूतः" नृभि-स्त्वदीयैः स्तोतृभिः प्रेरितः "असि" भवसि राज्ञो हितकरणे त्वां स्तोतारः प्रीणयन्तीत्यर्थः [षु प्रेरणे, अस्मात् कर्मणि निष्ठा "तृतीया कर्मणि (६,२,४८)"—इति पूर्वपद-प्रकृति-स्वरत्वम्] अपिच हे "प्रशर्ध" प्रकर्षेण शर्द्धयितरभिभवितरिन्द्र ! "तुर्वशे"—एतन्नामके राजनि नृषूतोऽसि नृभिः प्रेरितोऽसि भवसि ॥१॥

अथ द्वितीया ।

१ ३ २ ३ १ २ १ ३ १ २ ३ २ ३१ २ ३ १ १ ३१ १
यद्वारुमेरुशमे श्यावकेकृपइन्द्रमादयसेसचा ।
१ २ ३ १ २ ३ १ २ ३ १र २र ३ १ २
कण्वासस्त्वास्तोमेभिर्ब्रह्मवाहसइन्द्रायच्छन्त्यागहि ॥२*॥१२

"यद्वा" यद्यपि "रुमे" रुमादिषु चतुर्षु राजसु हे "इन्द्रः ! त्वं "सचा" सह "मादयसे" माद्यसि तथापि "ब्रह्मवाहसः" ब्रह्मणां स्तोत्राणां वोढारः अथवा अन्नानां वोढारः "कण्वासः" कण्वगोत्रा ऋषयः "स्तोमेभिः" स्तोत्रैः स्तोत्रसमूहैः सह "इन्द्र !" त्वाम् "आयच्छन्ति" आयमयन्ति अतस्त्वम् "आगहि" शीघ्र-मागच्छ [गमेर्लोटि छान्दसः (२, ४, ७३) शपो लुक्] ॥

"स्तोमेभिर्ब्रह्मवाहसः"—"ब्रह्मभिःस्तोमवाहसः"——इति पाठौ ॥ २ ॥ १२

२ र र २ १ १र
॥ नैपातिथम् ॥ यदिन्द्रप्रागपागुदा३ग्वे । नायस्वा

---

* ऋ० वे० ५, ७, ३०, १ ।

र १ २ २ ३र ५ १
ऋ। यसायिनृभीऽः। हा। औहो२३४हा। सिमा२

१र १रर १ २ १ ७ २ ३र ५
पुरूनृषूतोअ। सियानवे२३। हा। औहो२३४हा।

१ २ २ ३र ५ १ ३ ५र
असायिप्रागा३। हा। औहो२३४हा। धा२तू२३४औ

र ५ २ २ १
होवा। वा२३४शे॥(१) असिप्रशर्द्धतुर्वशा३इ। आसि

२ १ २ २ ३र ५ १ १२र
प्रश। धतूर्वशे३। हा। औहो२३४हा। यद्वा२रुमे

१२र १र २ १ ७ २ ३र ५ १
रुशमेश्या। वकायिकृपा२३। हा। औहो२३४हा। इ

२ २ ३र ५ १ ३ ५र
न्द्रामादा३। हा। औहो२३४हा। या२सा२३४औ

३ ५ २ र र २ १
होवा। सा२३४चा॥(२) इन्द्रमादयसेसचा३इ। आ

२र १ २ २ ३र ५
यिन्द्रमाद। यसायिसचा३। हा। औहो२३४हा।

१ र १र र २ १ २ १ ७ २ ३र
कण्वा२सस्त्वास्तोमेभिब्र। ह्मवाहसा२३ः। हा। औ

१ १ २ ३र ५
हो२३४हा। इन्द्रायाच्छा३। हा। औहो२३४हा।

१ ३ ५र र ३ ५
ता२आ२३४औहोवा। गा२३४ही(३)॥ १५*॥ [१] १३

---

* ऊ० गा० ४प्र० १ख० १५सा० ।

अथ प्रगाथे चतुर्थसूक्तम्*—

प्रथमा ।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २र
उभयꣳ शृणवच्चन इन्द्रो अर्वागिदं वचः ।
३ १ २ ३ २ ३ १ २ ३ १२र २र ३ १ २
सत्राच्या मघवान्त्सोमपीतये धिया शविष्ठ आगमत् ॥ १ † ॥

"उभयं" स्तोत्रात्मकं शस्त्रात्मकञ्चोभयविधम् "इदं" "वचः" "अर्वाग्" अस्मदभिमुखम् इन्द्रः "शृणवत्" शृणोतु त्वञ्च "मघवान्" धनवान् इन्द्रः "सत्राच्या" अस्माकं सह अञ्चत्या "धिया" युक्तः सन् "शविष्ठः" अतिशयेन बलवान् "सोमपीतये" सोमस्य पानाय "आगमत्" आगच्छतु ॥ १ ॥

अथ द्वितीया ।

१उ ३ १ २ ३ १र २र ३ १ २ ३ १ २
तꣳ हि स्वराजं वृषभन्तमोजसा धिषणे निष्टतक्षतुः ।
३ २ ३ १ २ ३ १र २र ३ १ २ ३ २ ३ १ २
उतोपमानाम्प्रथमो निषीदसि सोमकामꣳ हि ते मनः ॥ २ ‡ ॥ १९

"तं हि" तं खल्विन्द्रं "स्वराजं" स्वयमेव राजमानो "धिषणे" द्यावापृथिव्यौ "वृषभं" जगदुपकारकं वृष्टेर्वर्षकम् "ओजसा" बलेन "निष्टतक्षतुः" सञ्चरतुः "उत" अपिच यस्मादेवं तस्मात् हे

* 'अच्छावाक साम'—इति वि० ।

† ऋ० आ० ३, २, ५, ८ ( १भा० ५९१४० )=ऋ० वे० ६, ४, २५, १ ।

‡ ऋ० वे० ६, ४, २५, २ ।

इन्द्र ! उपमानभूतानामन्येषां देवानां मध्ये "प्रथमः" मुख्यः सन् "निषीदसि" वेद्यां सोमकामं "हि" खलु ते मनः ॥

"ओजसा"-"ओजसः"—इति पाठौ ॥ २ ॥ १४

२ २ १
॥ वैयश्वम् ॥ उभयꣳशृणवच्चनाऽ२ए । आयिन्द्रो२

१र १ १ २ १र १र १
अर्वागिदंवचा२३ः । ह्वोवा३ह्वायि । सत्राचियामघवा

१ २ २ ३ ५ १ १र
२न् । सो । मापा३ह्वायि । ता२३४यायि । धियाअ

१ २ १ ४ ५ २ र
विष्ठआ२३होयि । गमात् । औ२३ह्वोवा ॥(१) धिया

र २ १ १ १ १र १
अविष्ठआगमा३दे । धाया२अविष्ठआगमा२३त् । ह्वो

१ २ १ २ १र १ २ २
वा३ह्वायि । तꣳह्विस्वराजा२वृषभाम् । तामो३ह्वायि ।

३ ५ १ र १ २ १
जा२३४सा । धिषणेनिष्टता२३ह्वोयि । त्वतः । औ२३

४ ५ १ र २ १ र १
ह्वोवा ॥(२) धिषणेनिष्टतत्वतू३रे । धायिषा२णेनिष्टत

१ २ १ १ र २ १र १
त्वत२३ः । ह्वोवा३ह्वायि । उतोपामा२प्रथमो । नायि

२ २ ३ ५ १र र १
षा३र्ह्वायि । दा२३४सायि । सोमकाम७ंहिता२३यिहो

२ १ ४ ५ ४
यि । मना । औ३होवा । होऽ५ई । डा(३) ॥ १६* ॥[१]

२ १ २ १ र
॥ वाम्रम् ॥ उभय७ंशृ । णवाच्च१ना२ः । इन्द्रो

र २ १ र र र र १
अर्वागिदांवा१चा२ः । सत्राच्यामघवांत्सोमपायिता१या

१र २ १ ३ ५र र
२यि । धियाशा २ ३ वा ३यि । ष्ठा२आ२३४औहोवा ।

३ ५ १र १ २
गा २ ३ ४मात् ॥(१) धियाशवायि । ष्ठआगा१मा२त् ।

१ र र २ १ र २
धियाशविष्ठआगा१मा२त् । त७ंहिस्वराजंवृषभन्तमो१

१ २ १ ३ ५र र
जासा२ । धिषणे२३ना३यिः । ता२ता २ ३ ४औहोवा ।

२ ५ २ र १ २ १
त्ना२३४तूः ॥(२) धिषणे नायिः । तताक्षा१तू२ः । धि

र २ १ र र र र २
षणे निष्टताक्षा१तू२ः । उतोपमानाम्प्रथमोनिषायिदा१

---

* ऊ० गा० ४प्र० २ख० १६सा० ।

र १ २ १ ३ ५ र र
सा॑र्यि। सोमका२३मा३म्। हा२यिता२३४औहोवा।
३ ५
मा२३४नाः(३)॥ ७* ॥ [२] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य
सप्तमः खण्डः† ॥ ७ ॥

---

अथाष्टम-खण्डे —

तृचात्मके प्रथमसूक्ते —

प्रथमा।

१ २ ३ १ २ ३ १र २र ३ १ २
पवस्वदेवआयुषगिन्द्रंगच्छतुतेमदः।
३ १र २र ३ १ २
वायुमारोहधर्म्मणा॥ ‡ १ ॥

हे सोम! "देवः" द्योतमानः त्वं "पवस्व" धारया क्षर। अपिच "ते" तव "मदः" मदकरः रसः "आयुषक्" तम् "इन्द्रं" प्रति "गच्छतु" अपिच त्वं "वायुं" "धर्म्मणा" धारकेण रसेन "आरोह" प्राप्नुहि॥

"देवः"-"देव"—इति पाठौ॥ १ ॥

---

* ऊ० गा० १८प्र० २ख० ७षा०।

† 'उक्तानि पृष्ठानि'—इति वि०।

‡ छ० आ० ६, २, १, ५ (२भा० ३७पृ०)=ऋ० वे० ७, ४, २३, १।

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २ ३ १ २
पवमाननितोशसेरयिँसोमश्रवाय्यम् ।
१ २ ३ १२ ३२
इन्दोसमुद्रमाविश ॥ २ * ॥

हे "पवमान !" "इन्दो !" "सोम !" त्वं "श्रवाय्यं" श्रवणीयं "रयिं" शत्रूणां धनं "नि तोशसे" अतितरां पीडयसि† स त्वं "समुद्रं" द्रोणकलशम् "आ विश" प्रविश ॥

"इन्दो"-"प्रियः"—इति पाठौ ॥ २ ॥

अपघ्नन्पवसेमृधइति तृतीया‡ ।

२ १ २ ३ १ २
अपघ्नन्पवसेमृधः० ॥ ३ ॥ १५

ऋचः प्रतीकमिदम् ॥ सा च छन्दस्याम्नाता ( ६, १, १, ६—२भा० ४८ पृ० ) व्याख्याता च ॥ ३ ॥ १५

२ १ १ १ २
॥ शुद्धपाद्यम् ॥ पवस्वदा२यि । इया२इया । व
२ १ १ १ १ २ २ १
आयूषा२क् । इन्द्रङ्गच्छा २ । इया२इया । तुतेमा

---

* ऋ० वे० ७, ४, २३, ५ ।

† 'तोशसि—तंश दाने ददासि'—इति वि० ।

‡ छ० आ० ६, १, १, ६ ( २भा० ४८पृ० )=ऋ० वे० ७, १, २४, ४ ।

२ १२ १ २ १ २
दा२ः। वायुमारो२। इया२इया। द्धर्मा२३णा३

१ १२ १ ३२ १
४३॥(१) पवमाना२। इया२इया। नितोशासा२यि।

१२ १ २ २ १ २ १ १
रयिꣳसोमा२इया। श्रवाय्या२। इन्दोसमू२। इया

१ १ १२ १ २ १ १
२इया। द्रमावा२३यिश्रा३४३॥(२) अपघ्नन्पा२। इया

१ १२ १ १ १ १
२इया। वसेमार्द्धा२ः। क्रतुवित्मो२। इया२इया।

२ १ १२ १ १ १
ममत्मारा२ः। नुदस्वादा२यि। इया२इया। वयु

२ १
ञ्जा२३ना३४३म्। ओ२३४५ई। डा(३)॥१७*॥ [१]

५ २ ४ ५ ४ ५ १
॥भासम्†॥ पव। स्वा३दायि। वाः। ईया। आ

२ १ २ ५ २२ ३२ १
यू१षा२क्। आयिन्द्रञ्च्छ। तु। तौ३द्धो। वाहा

१ १२ १ ३ ५२ २
यि। मदा२ः। वायू२३म्। आ२रो२३४औहोवा।

१ २१ ५ २ ४ ५ ४५ १
द्धर्म्मणा१॥(१) पव। मा३ना। नायि। ईया। तो

२ १ १२ ५ २२ ३२ २
शा१सा२यि। रायिꣳसोम। आवौ३र्द्धा। वाहायि।

* ऊ० गा० ४प्र० २ख० १७गा०।

† "गायत्रीभासम्"—इति ख० पु०।

इ॒या२म्। इ॒न्दो२३। सा॒२मू२३४औ॒होवा। द्र॒मा॒
वि॒श्रा१॥(२) अ॒प। घ्ना३॒न्पा। वा। इ॒या। सा॒यि॒
मा॒र्धा२ः। क्रा॒तु॒वि॒त्सो॒। म। मौ३हो॒। वा॒हा। म॒रा२ः।
तु॒दा२३। सा॒२दा२३४औ॒होवा। व॒यु॒ञ्जना२म्(३)
॥ १८* ॥ [२]

॥ काक्षीवन्तम् † ॥ पवस्वा३देवआयुषाक्। इ॒न्द्रा॒
ङ्गच्छ। तुतेमदा२ः। ओ३४। हाहोयि। वायूमा२
३रो। हधौहोयि। औहो२३४वा। मा५णोऽहायि ॥(१)
पवमाननितोग्रसायि। रयायि७सोम। श्रवायिया३म्।
औ३४। हाहोयि। इन्दोसा२३म्। द्रमौहोयि। औ
हो२३४वा। वा५यिशोऽहायि ॥(२) अपघ्ना३न्पवसेमृ
धाः। क्रतूवित्सो। ममत्सरा२ः। ओ३४। हाहोयि।

* ऊ० गा० ४प्र० २ख० १८सा० ।
† "काक्षीवतम्"—इति ख० पु० पाठः ।

१ २ ३र २ ३र १ ५ ४
नुदास्वार२३दाथि । वायौहोयि । औहो२३४वा । जा

५
म्नोई२३ायि(३) ॥ १९ * ॥ [३]

३ ४ ५ र ४ ५र १ २
॥ गायत्रासितम् † ॥ पवस्वदेवआ । इया३४३ई३४

१ २ २ १ १
या । युषागिन्द्रङ्गच्छतुतौ२ । हौ२ । ऊवा२यि । मा

१र २ १ र २ १ २ १ २
दा२ः । वायू३ हौयि । आरो३हो । च्धर्म्मा२३णा

३ ४ ५र ४ ५र २ २ ५ १
३४३ ॥(१) पवमाननितौ । इया३४३ई३४या । शसायि

र २ १ १ १
रयिसोमश्रवौ२ । हौ२ । ऊवा२यि । आया२म् ।

२ १ २ १ २ १र २
इन्दो३हौयि । समू३हो । द्रमावा२३यिशा ३ ४ ३ ॥(२)

४ ३ ४ ५ र २ २ ५ १ र
अपघ्नन्पवसे । इया ३ ४ ३ई३४या । स्त्रधाःक्रतुवित्सोम

१ १ १ २ १
मौ२ । हौ२ । ऊवा२यि । त्सारा२ः । नुदा३हो

र २ १ २ १ २ १
यि । स्वादा३हौ । वयुञ्जा२३ना३४३म् । ओ२३४५ई ।

डा(३) ॥ २० ‡ ॥ [४]

* ऊ० गा० ४प्र० २ख० १९सा० ।

† "वासिष्ठमासितम्"—इति ख० पु० ।

‡ ऊ० गा० ४प्र० २ख० २०सा० ।

॥ ऐडसैन्धुक्षितम् ॥ पवस्वदो। हायि। वआय२ ३षाक्। इन्द्रङ्गच्छतुना१यिमा३दाः। वायुमारो२३४ हायि। हाधा३हा। मणा। औ३होवा ॥(१) पव मानो। हायि। निलोशा२३सायि। रयिᳫंसोमश्रवा१ आ३याम्। इन्दोसमो२३४हायि। द्रामा३हायि। वि शा। औ३होवा ॥(२) अपघ्नन्यो। हायि। वसेमा २३र्धाः। क्रतुवित्सोममा१त्सा३राः। नुदस्वादो२३४हा यि। वायू३ᳫंहायि। जनाम्। औ२३होवा। ह्वोपु ई। डा(३) ॥ १* ॥ [५] १५

अथ तृतीयसूक्ते तृचात्मके—

अभीनोवाजसातममिति प्रतीकम्,

अभीनोवाजसातमं०॥ १† ॥

सा चाम्नाता ( ६, २, १, ५=२भा० १६१पृ० ) व्याख्याताच ॥ १ ॥

---

* ऊ० गा० १७प्र० १ख० १सा० ।

† छ० आ० ६, २, १, ५ ( २भा० १६१पृ० )=ऋ० वे० ७, ४, १३, १ ।

अथ द्वितीया।

२ १ १ ३ १र २र ३ १ २ ३ १ २
वयन्ते अस्यराधसोवसोर्वसोपुरुस्पृहः।
१ २र ३ १र २र ३ १ २
निनेदिष्ठतमाइषःस्यामसुम्नेते अध्रिगो ॥ २ * ॥

हे "वसो" वासयितः! सोम! "अस्य" एतादृशस्य "ते" तव "राधसः" धनस्य "पुरुस्पृहः" बहुभिः स्पृहणीयस्य "वसोः" वासकस्य त्वदीय-दीयमानस्य वयं नितरां "नेदिष्ठतमाः" अत्यन्तमन्तिकतमाः "स्याम" भवेम ॥ २ ॥

अथ तृतीया।

२ ३ २ ३ १ २ ३ २ ३ ३ १ १
परिस्यस्वानोअक्षरदिन्दुरव्येमदच्युतः।
२ ३ २ ३ १ २ ३ १ २ ३ १र २र ३ १
धारायऊर्द्ध्वोअध्वरेभ्राजानयातिगव्ययुः ॥३†॥ १६

"गव्ययुः" गोकामः यद्वा क्षीरादि कामयमानः "ऊर्द्धः" समुच्छ्रितः सर्वेषां मुख्यो "यः" सोमः "भ्राजा न" यथा भ्राजमानया दीप्तया अन्तरिक्षे गच्छति तद्वत् दीप्त्या सह "अध्वरे" यज्ञे "धारा" स्वकीयया धारया "याति" गच्छति। "स्वानः" सुवानः अभिषूयमाणः सः "इन्दुः" सोमः "मदच्युतः" मदार्थं

---

* ऋ० वे० ७, ४, २३, ५।

† ऋ० वे० ७, ४, २३, ३।

वेदैः प्रेरितः सन् "अव्ये" अवि भवे पवित्रे "पर्यक्षरत्" परितः क्षरति ।

"अक्षरत्"-"अक्षाः"—इति पाठौ ॥ ३ ॥ १६

५ र   ३र २   ४ र ५
॥ गौरीवितम्* ॥ अभी । नोवा३ । जसातमाम् ।
१   १ र २   ४
रयिमर्षशतस्पृहा२३म् । आयिन्दोसहा३१२३ । स्वभा
१ २   ४ ५   ४
पूर्णसाम् । तूविद्युम्ना३१२३म् । विभोवा । सा५होई
५   ५   ३र २   ४ ५   १र र
हायि ॥(१) वयम् । तेआ३ । स्यराधसाः । वसोर्वसो
१ र २   ४   १
पुरुस्पृहा२३ः । नायिनेदिष्ठा३१२३ । तमा५इषाः । द्याम
२   ४ ५   ४   ५   ५
सुम्ना३१२३यि । नओवा । धा५यिगोई हायि ॥(२) परि ।
३ २   ४र ५   १ र   १
स्यस्वा३ । नोअक्षरात् । इन्दुरव्येमदच्युता२३ः । धा
र २   ४र   १ र २   ४
रायऊ३१२३ । ध्वोआ५ध्वरायि । आजानया३१२३ । ति
५   ४   ५
गोवा । व्या५योई हायि(३) ॥ २ ॥† ॥ [१]

३ र २र १   ४र र   ५
॥ ऐडकौत्सम् ॥ अभीहोने।२३ । वाजसातममीया ।

* "महागौरीवितम्"—इति ख० पु० पाठः ।

† ऊ० गा० ५प्र० १अ० १सा० ।

२ १ १ २ १ २ १ १ २
रयिमर्षशतस्पृहम् । आयिन्दोसह । स्रभर्णा२३साम् ।
१ १ २ १ २ २ १२ २
तूवा२हायि । द्यू म्ना३ऽ हायि । विभासा२३हा३४३म् ॥(१)
२ २१ १ ४ ५ १२२ १ २ १ १
वयऽ द्दीते२३ । अस्यराधसईया । वसोर्वसोपुरुस्पृहः ।
१ २ १ १२ १ १ २ २ १ १
नायिनेदिष्ठ । तमाआ२३यिषाः । स्रामा२हायि । सूम्ना
२ २ १ २ ३२ १ १
३यिहायि । तेअभा२३यिगा३४३उ ॥(२) परीहिस्रा२३ः ।
४२ २ ५ १ २ १ २२ १ २ १ २ २ २
स्रानोअन्तरदीया । इन्दुरव्यमदच्युतः । धारायज्ञ ।
२ १ २ १ २ २ १ २ २ १
ध्वोअध्वा२३रायि । भ्राजा२हा । नाया२हा । तिगव्या
२ १
२३यू३४३ः । ओ२३४५ई । डा (३) ॥ ४ * ॥ [२]
२ १२ २ १२ १२ २ १
॥ पदापाङ्क्तीयाद्यम् † ॥ अभीनोवाजसातमाम् । रयि
२ १ २ १ २ २ १ २ १
मर्षशतस्पृ२३हाम् । इन्दोसहस्रभर्णा२३साम् । तुवा
२ ३२ १ ५२ २ २ १
यिद्यू२३म्ना३म् । वा२यि । भामा३४औहोवा । हा२
१ १ १ २ १ २ २ १२२ १ २ २ २ १ २
३४५म् ॥(१) वयन्तेअस्यराधसाः । वसोर्वसोपुरुस्पृ२३हाः ।

* ऋ० मा० ५प्र० १ख० ४सा० ।

† "पदाद्यपाङ्क्तीयाद्यम्"—इति ख० पु० ।

१ र १ १र २ र १ २ १
निनेदिष्ठतमाआ२३यिषाः । स्वामसूर३म्नाश्यि । तेर ।
३ १ ५र र ३ १ १ १ १ १ १ १ १र १र २
भग्ना३४औहोवा । गा२३४५उ ॥(२) परिस्यस्वानोअक्ष
२ र २ १ २ १र र र २र १
रात् । इन्दुरव्येमदच्यू२३ताः । धारायऊर्ध्वोअध्वा२३
२ र १र २ १ ३ २ ५र र
राथि । आजाना२३या३ । ता२यि । गव्या३४औहो
३ १ १ १ १
वा । यू२३४५:(३) ॥ ५ * ॥ [३]

२ र १र र २र १ २
॥ कौत्साद्यम् ॥ अमीनोवौहो । जामातमाम् । र
१ २ ४ २ र १
यिमर्षा३ । आता ३ सू५हा६ ५ ईम् । इन्दोसहौहो ।
२र १ २ १ २ ४
स्वाभर्णसाम् । तुयिद्युम्ना३म् । वायिभा३सा५हा६५६म्॥(१)
२ १ र १र १र १ र १ २ ४
वयन्तऔहो । स्वाराधसाः । वसोर्वसा३उ । पूरू३स्प
२ र १ र १र १र १र
५हा६५६: । निनेदिष्ठौहो । तामाइषाः । स्वामस्तु
१ २ ४ २ १र
म्ना३यि । तेआ३ग्ना५यिगा६५६उ ॥(२) परिस्यसौहो ।
२र १ २ १ ८
नोअक्षरात् । इन्दुरव्या३यि । मादा३च्यू५ता ६ ५ ६: ।

* ऊ० गा० ५प्र० १अ० ५खा० ।

२र र १ र २र १ २र र १
धारायऔहो। ध्वोअध्वरायि। आजानया३। तायि
१ ४
गा३व्या५यू६५६:(३) ॥ ६ * ॥ [४]

२ र र १ २ २ ५
॥ रयिष्ठम् ॥ अभीनोवा। जसाता३माम्। औ३
२ २ १ २ १ १ १ १ १ १ २ १
हो३वा। रयिमर्षशतस्पृ६हा२३४५म्। रयिमर्षा। शता
१ ५ २ २ १ र २ १ २ ३ १ १ १ १ २
स्पृ६३हाम्। औ३हो३वा। इन्दोसहस्रभर्णसा२३४५म्।
र १ २ २ ५ २ २ १
इन्दोसहा। स्रभार्णा३साम्। औ३हो३वा। तुविद्यु
२र १ ३ १ १ १ १ २ १ २ २
म्नंविभासहा२३४५म्। तुविद्युम्नाम्। विभासा३हाम्।
५ २ २ २ र १ २ २ ५
औ३हो३वा ॥(१) वयन्तेआ। स्यराधा३साः। औ३
२ २ १ र २ र १ ३ १ १ १ १ २ र
हो३वा। वसोर्वसोपुरुस्पृ६हा२३४५:। वसोर्वसाउ
१ २ २ ५ २ २ १र २ र २ २
पुरुस्पृ६३हाः। औ३हो३वा। निनेदिष्ठतमाइषा१:।
२ र १ २ २ ५ २ २ १र
निनेदिष्ठा। तमाआ३यिषाः। औ३हो३वा। स्याम
२र र र २ ३ १ १ १ १ २र र १ २
सुम्ने तेअध्रिगा२३४५उ। स्यामसुम्नायि। तेआध्रा३यि

---

* ऊ० गा० प्रप्र० १ख० ६सा०।

२ ॢ २ २ २ र १ २ २
गा। औ३होऽ३वा ॥(२) परिस्रवा। नोआहाऽ३रात्।

ॢ २ २ १ २ १ २र १ २ ३ १ १ १ १ २
औ३होऽ३वा। इन्दुरव्येमदच्युता२३४५:। इन्दुरव्यायि।

१ २ २ ॢ २ २ १र २र १ २र १र २ २ २
मदाच्यु३ता:। औ३होऽ३वा। धारायऊर्वीअध्वराश्यि।

२र र र १ २ २ ॢ २ २ र १र
धारायऊ। ध्वोआध्वा३रायि। औ३होऽ३वा। आजा

र २ ३ २ २र र १ २ १ ॢ
नयातिगव्ययू१:। आजानया। तिगाव्या३यू:। औ३

२ २ ॢ २ २ ॢ २ ॢ २ ५
होऽ३वा। औ३होऽ३वा। ई३या। ई३या३ ४। वा।

२ २ ५
हाउवा३। ऊ३२३४पा(३) ॥ ७ * ॥ [५]

१ २र र १ १ २ १
॥ औदलम् ॥ अभीनोवा। जासा२तमाम्। रयि

२ १ २ ३ ५ १ २र १
मर्षा३। शातस्प२३४हाम्। इन्दोसहा। स्राभा२र्ण

१ २ १ २ १ ४ २
साम्। तुवायिद्यु२३म्ना३म्। वा२३यिभा३। सा३४५

५ १ २ र १ १ २ १र
हो६५६हायि ॥(१) वयन्तेआ। स्पारा२धसा:। वसो

२ १ २ ३ ५ १ २र १ १
वसा३उ। पुरुस्प२३४हा:। निनेदिष्ठा। तामा२इषा:।

* ऊ० गा० ५प्र० १अ० ७सा०।

२र १ २ १ ४ २ ५
स्याम मू२३म्नाश्यि। ते२३श्रा३। प्रा३४५यिगो६हायि ॥(२)

१ २ १ १ २ १ २ १ २
परिस्वखा। नोश्रा२श्वरात्। इन्दुरव्या ३यि। माद

२ ५ १र २र १ १ २र १र
च्यू२३४ताः। धारायऊ। ध्वोश्रा२ध्वरायि। भ्राजाना

२ १ ४ २ ५
२३या३। ता२३यिगा३। व्या३४५यो६हायि(३) ॥८*॥ [६]

३ २ २ ४र ५र २
॥ श्यावाश्वम् ॥ अभा३१यि। नो३वा। जसा। ता

४ ५ १ २ १
३मम्। एहिया। रा। ग्मिमर्षशा। त। स्पृहा२म्।

१र र १ २ ४ ५ २र
एहिया२। इन्दोसहाखा३भा३। णा२३४साम्। ऐहा

१र १ २ ४ २
२यि। एहिया२। तुविद्युम्नांवा३यिभा३। सा३४५हो

५ ३ २ २ ४ ५र २ ४
६हायि ॥(१) वया३१म्। ते३श्र। स्वरा। धा३सः।

५ १ र र २ १ १र
एहिया। वा। सोवंसोपू। रू। स्पृहा२ः। एहिया

र १ २ ४ ५ २र
२। निर्नेदिष्ठाता३मा३ः। आ२३४यिषाः। ऐहा२यि।

१र र १ २ ४ २
एहिया२। स्वामसुम्नायिते३श्रा३। प्रा३४५यिगो६

---

* ऊ० गा० ५प्र० १ अ० ८सा०।

ह्वायि ॥(१) परा३१यि। स्वा३स्वा। नौम। व्वा३रत्।
एहिया। आयि। दुरव्येमा। द। च्यु ता२ः। एहिया
२। धारायऊर्द्धोइआ३। धा२३४रायि। ऐ्हा२यि।
एहिया२। भ्राजानयाता३यिगा३। व्या३ ४ ५ यो६हा
यि(३) ॥ १५ * ॥ [७]

॥ आन्धीगवम् ॥ अभीनोवाजसा१तामाम्। रयिम्।
षश्वा२३ता। ऊम्भा२१ऽ२। स्पृ हमिन्दोसहस्रभर्णसार
३४५म्। तूवा३उवा। द्यू२म्नाम्। वा२३यिभा। स
हाम्। औ२३होवा ॥(१) वयन्तेअस्यरा१धासाः। वसो
वं। सोपू२३ह्व। ऊम्भा२१ऽ२। स्पृहोनिनेदिष्ठतमा
इषा१ः। स्यामा३उवा। सू२म्नायि। ते२३आ। भ्रि
गा। औ३होवा ॥(२) परिस्यस्वानोआ१चारात्। इन्दु

* ऊ० गा० १२प्र० १अ० १५खा०।

र। व्येमा२३दा। ऊम्मा२१२। च्युतोधारायऊर्द्ध्वी

अध्वरा१यि। भाजा३उवा। ना२या। ता२३यिगा।

व्ययूः। औ२३होवा। हो५ई। डा(३)॥ १६ *॥ [८]

॥ निषेधम् † ॥ अभीनोवाजा३सातमाम्। रयायिम

र्षा। शतस्पृहा२म्। इहा३। आयिन्दो३साहा। हा

हो२३४हा। सभर्णा२३साम्। इहा३। तूवा३यिद्यु

म्नाम्। हाहो २ ३ ४ हा। विभा३सा५हा६५६म्॥(१)

वयन्ते अस्या३रा३धसाः। वसोर्वसाउ। पुरुस्पृहा२ः।

इहा३। नायिने३दायिष्ठा। हाहो२३४हा। तमाआ

२३यिषाः। इहा३। स्यामा३सूम्नायि। हाहो२३४हा।

तेआ३धा५यिगा६५६उ॥(२) परिस्यस्वानो३अचरात्।

इन्दुरव्यायि। मदच्युता२ः। इहा३। धारा३याऊ।

* ऊ० गा० १२प्र० १ख० १६सा०। † "निषेधः"—इति ख० पु० पाठः।

२ ३ ३ २र १ २ १ २ १ २
हाहोर३४हा। ध्वोअध्वार३रायि। इहा३। भाजा

४ ५ २ ३ ५ ३ २ ४ ३ १ १
३नाया। हाहोर३४हा। तिगा३व्या५यूऽ६५६:। हेर३

१ १
४५(३) ॥ १२ * ॥ [९]

५ र २ ४र ५ ४र ५ २ १ २ १
॥ साधम् ॥ अभीनो३वाजसातमाम्। रयायिमर्षा

३ २ ३ ५ १ र २ १ २ ३ १ १
२। शता३४५। स्पृ२३४हाम्। इन्दोसहस्रभर्णसा२३

१ १ १ २ ३ ५ १ २ ३ ५ ४
४५म्। तुवाओर३४वा। द्युम्नाओर३४वा। विभा५

५ २ ४ ५ ४र ५ २ १ २ १
सहाम् ॥(१) वयन्ते३अस्यराधसाः। वसोर्वसा २ उ।

३ २ ३ ५ १ र २ २ ३ २ २
पुरु३४५। स्पृ२३हाः। निनेदिष्ठतमाइषा१ः। स्यामा

३ ५ १ २ ३ ५ ४र
ओर३४वा। सुम्नाओर३४वा। तेअ५धिगाउ ॥(२)

५ २ ४ ५र ४ ५ २ १ २ १ ३ २
परिस्या३स्वानोअक्षरात्। इन्दूरव्या२यि। मदा३४५।

३ ५ १र २र १ २र १र २ ३ २ २ ३
च्यू२३४ताः। धारायऊर्ध्वोअध्वरा१यि। भाजाओर३४

* ऊ० गा० १७प्र० १ख० १२सा०।

वा। नायाश्चोर२ ३४वा। तिगा ५ व्ययूः। होपुङ्कै।

डा(३) ॥ १३ * ॥ [१०]

॥ यज्ञायज्ञीयम् ॥ अभा ऽ५यिनः। वा३जा३साता

माम्। रायिमर्षा। शा३तास्यू२हाम्। इन्दो२स।

द्युम्ना२३भा। ऊम्मायि। णा३साम्। दुविद्युम्नंविभा

२ सहाउ ॥(१) हावा। यन्तेअस्वराधसोवसोर्वसाउ।

पू३रूस्पू२हाः। निने२दि। ष्टता२३माः। ऊम्मायि।

आ ३ यिषाः। त्वामसुम्नेते२आ२भ्रिगाउ ॥(२) गोपा।

रिसस्वानोअत्तरदिन्दुरव्यायि। मा३दाच्यू३ताः। धा

रा२यः। ऊर्ध्वो२३५। ऊम्मायि। ध्वा३रायि। भ्राजा

नयातिगार्व्ययाउ। वा३४५(३) ॥ १४ † ॥ [११]

---

* ऊ० गा० १७प्र० १ख० १३सा०।

† ऊ० गा० १७प्र० १ख० १४सा०।

२ र र र २र १
॥ स्वारकौत्सम् ॥ अभीनोवाजा३सातमाम्। रयि

२ २ २ र २ १ २ २
मर्षंशता१स्पृ३हाम्। इन्दोसह्वा३। स्वा३भार्णा३साम्।

१ ३ ५ ३ २ २
आ॰२यि। तुविद्युम्नो२३४हायि। विभा३सापुह्वा६५६म्॥(१)

२ र २र १ र र २ २ २ र
वयन्ते अस्या३राधसाः। वसोर्वसोपुरू१स्पृ३हाः। निने

२ १ २ २ १ र २
दिष्ठा३। ता३मा आ३यिषाः। आ॰२यि। स्यामसुम्नो

५ ३र २ ४ २ र
२३४हायि। ते आ३धापयिगा६५६उ॥(२) परिस्य स्वा

२ १ र र २ २ र र
नो३अक्षरात्। इन्दुरव्ये मदा१च्युऽ३ताः। धारायऊ३।

२ १ २ २ १ र र ३ ५
र्ध्वो३आध्वा३रायि। आ॰२यि। भ्राजानयो२३४हायि।

३ २ ४
तिगा३व्या५यू६५६:(३) ॥ १८ * ॥ [१२]

२ र र ३ ५ २
॥ कार्त्तयशसम् ॥ अभीहा हाउ। नो२३४वा। ज

१ २ २ ४ ५ २१ २ २ ४ ५
सा औ३हो३तामाम्। रयायिमौ३हो३यि। आर्षा६।

५ २ १ १ २ १ र २ २
हाउवा। शतस्पृहा२म्। उपा। इन्दोसहस्रभा१र्णा

* ऊ० गा० १७प्र० १ख० १९षा०।

२ १ १ २ ४ ५ ५ २
३साम् । तुवऔ३हो३यि । द्यू म्नाई म् । हाउवा । वि
र १ ३ १ १ १ १ १ २ र ३
भासहम् । उपा२३४५ ॥(१) वयꣳहाहाउ । ते २ ३ ४
५ २ १ २ २ ४ ५ २ १ २ २
आ । स्वराऔ३हो३ । धासाः । वसाऔ३हो ३ यि ।
४ ५ ५ २ १ १ २ १ र
वासा६उ । हाउवा । पुरुस्पृहा २ः । उपा । निनेदि
२ २ २ र १ २ २ ४ ५
ष्ठतमा१आ३यिषाः । स्यामाऔ३हो३यि । सुम्ना६हायि ।
५ २र १ र ३ १ १ १ १ २ र र
हाउवा । तेअध्रिगो । उपा२३४५ ॥(२) परीहाहाउ ।
३ ५ २र १ २ २ ४ ५ २ १ २ २
स्वार२३४स्वा । नोआऔ३हो३ । वारात् । इन्दूरौ३हो३
२ ५ ५ २ १ १ २
यि । आव्या६यि । हाउवा । मदच्युता २ः । उपा ।
१र र र र २ २ २ र १ २ २ ४ ५
धारायऊर्द्ध्वआ१ध्वा३रायि । भ्राजाऔ३हो३ । नाया
५ २ १ ३ १ १ १
६ । हाउवा । तिगव्ययूः । उपा२३४५(३) ॥ १० * ॥[१३]
२ र र २
॥ त्रीतन्वाष्ट्रीसाम† ॥ अभीनोवा । जसा३नमाम् ।
१ २ २ २ १ ३ २ १ २ २
रयायिमर्षा६श्रता३ । ए३ । स्पृहमा । इन्दोसहा३स्रभा

* ऊ० गा० १८प्र० १ख० १०सा० । † "त्र्यम्नाष्ट्री साम"—इति ख० पु० पाठः ।

१ २३२ १ १ २ १
३। ए३। णसमा। तुवायिद्यु,म्नाइविभाइ। ए३।
२३२
सहमा(१)॥ ८ * ॥ [१४] १६

अथ तृतीयसूक्ते—

प्रथमा।

१२ ३१ २३२ ३२३२ १ १ १ १२ १२
पवस्वसोममहांत्समुद्रःपितादेवानांविश्वाभिधाम ॥१†॥

हे "सोम!" "महान्" "देवेभ्यो" दीप्यमानत्वेन महत्व-युक्तः, "समुद्रः" समुन्दनः यस्मात् समुद्रवन्ति तादृशः, "पिता" सर्वेषां पालयिता त्वं "देवानां" "विश्वा" विश्वानि सर्वाणि "धाम" धामानि शरीराणि "अभि" लक्ष्य "पवस्व" चर ॥ १ ॥

अथ द्वितीया।

३१२ ३१२ ३१२ ३१२ २२३१ १
शुक्रःपवस्वदेवेभ्यःसोमदिवेपृथिव्यैशञ्चप्रजाभ्यः ॥ २ ‡ ॥

हे "सोम!" "शुक्रो" दीप्तः त्वं "देवेभ्यः" देवार्थं "पवस्व" चर। किञ्च "दिवे पृथिव्यै" च द्यावापृथिवीभ्याञ्च ततः "प्रजाभ्यः च" "शं" सुखं कुरु॥

"प्रजाभ्यः"-"प्रजायै"—इति पाठौ॥ २ ॥

---

* ऊ० आ० १९प्र० २ख० ९सा०।

† छ० आ० ५, १, ५, ३ (१आ० ८७३४० )=ऋ० वे० ७, ५, १०, ४।

‡ ऋ० वे० ७, ५, १०, ५।

अथ तृतीया।

२ २ ३ १ २ ३ २ ३ १२ ३१र २र ३ १ २
दिवोधर्त्तासिशुक्रःपीयूषःसत्येविधर्मन्वाजीपवस्व॥३*॥१७

हे सोम! "शुक्रः" दीप्तः "पीयूषः" पातव्यः त्वं "दिवः" द्युलोकस्य "धर्त्ता" धारकः "असि", "वाजी" बलवान् स त्वं "सत्ये" सत्यभूते "विधर्मन्" विधर्मणि [विविधानि कर्माणि ऋत्विजो कुर्वन्ति यस्मिन्; यद्वा, विविधं सोमादि-हविषां धारकेऽस्मिन्] यज्ञे "पवस्व" चर॥ ३ ॥ १७

२र २ र २ र १ ,३
॥ धर्मम् ॥ औहोऽ३वा। औहोऽ३वा। औहोऽ२वा
५र ५ १ २ र १र २ २ २ १र
२३४औहोऽ६वा। पवस्वसोममहान्समुद्रा१ः। पितादे२
१र १ २र १ र १ १ १ १ २ १ २ र १र
वाना२विश्व। उतिवामा२३४५॥(१) शुक्रःपवस्वदेवेभ्य
२र ३ १ १ १ १ २ १र २ १र २ १र १ १ १ १ २ १र
सोमा२३४५। दिवेपृथिव्यैशञ्चप्रजाभ्या२३४५ः। दिवो
२ १र २ १ २र १र १ १ १ १ २ १र २ र १र २ ३
धर्त्तासिशुक्रःपीयूषा२३४५ः। सत्येविधर्मन्वाजीपवस्वा
१ १ १ १ १ २ र २ १ १ १ १ २ १र ३ २ २ १र
२३४५॥(१) पवस्वसोमा२३४५। महान्समुद्रा१ः। पिता
१र १ १ १ १ १ २र १ र १ १ १ १ २ १
दे२वाना२३४५म्। विश्वाभिधामा२ ३ ४ ५॥(२) शुक्र

* ऋ० वे० ७, ५, १० ६।

२ ३ १११ १र१र २र ३ ११११ २१र २ १
पवस्वा२३४४। देवेभ्यःसोमा२३४५। दिवेपृथिव्याश्यि।
२१र ११११ २१र२१र३ ११११ २ १ १र१र
शस्वप्रचाम्या२३४५ः। दिवोधर्त्तासी२३४५। प्रुक्रःपीयू
११११ २१र ३२ २र१र २ ३ १ १ १ १
षा२३४५ः। सत्यविधर्म्मा१न्। वाजीपवस्वा२ ३ ४ ५।
२र ३ र १ ३ ५र ५ २ १
औहो३वा२। औहो२वा२३४औहो६वा। ए३। धर्म्मा
१११
२३४५(३) ॥ ८ * ॥ [१]

॥ आन्धीगवम् ॥ ३ २ १ २ १ पा१वास्वा। सो२३मा। ऋम्मा२
१र २ १ २ १र२र१र ३ ११११ १ २
१ऽ२। महान्त्समुद्रःपितादेवाना२३४५म्। वायिश्वा३
२ १ २ १ २ ४ ५ ४
उवा। भा२३यिधा। मा। औ३होवा। होपुई।
डा(३) ॥ ८ † ॥ [२] १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य

अष्टमः खण्डः‡ ॥ ८ ॥

---

* ऊ० गा० ५प्र० १ख० ८धा० ।

† ऊ० गा० २१प्र० ३ख० ८धा० ।

‡ 'यज्ञायज्ञीयमग्निष्टोमसाम,'—इति वि० ।

अथ नवम-खण्डे*—

प्रेष्ठंवइति त्र्यचात्मक सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ ३ १ २ ३ १
प्रेष्ठंवो अतिथिंस्तुषे मित्रमिवप्रियम् ।
२ ३ १ २ १ २ १२
अग्नेरथन्नवेद्यम् ॥ १ † ॥

हे "अग्ने!" "वः" त्वां [ पूजार्थे बहुवचनम् ] "स्तुषे" स्तौमि अहमुग्मनेति शेषः। कीदृशम्? प्रेष्ठम्" अस्माकं स्तोतॄणां धन-दानेन प्रियतमम्। "अतिथिं" सर्वैरतिथिवत् पूज्यं [यद्वा, अत सातत्यगमने (भ्वा० प०) ऋतन्यञ्जि (उ० ४,२)"—इत्यादिना अतेरिथिन्। सततं देवानां हविः प्रदातुं गच्छन्तम् ] "मित्रमिव" सखायमिव "प्रियं" स्तोतुः प्रीणनकारं "रथं न" रथमिव "वेद्यं" वेदो धनं धन-हितं लाभ-हेतुं [ यथा स्वाभिमत-लाभाय आश्रयन्ते धन-लाभ-हेतुं रथम्; यद्वा, यथा रथेन धनं लभते तद्वत् स्तोतारोऽनेन धनं लभन्ते, तादृश-धन-लाभ-कारणम् ]। हे अग्ने! तस्मै हितं वेद्यं त्वां कर्म-सिद्ध्यर्थम् अहं स्तोता स्तौमीति सम्बन्धः॥

"अग्ने"-"अग्निम्"—इति पाठौ॥ १ ॥

---

* इदानीमुक्थसामानि भवन्ति श्रौग्नं प्रथममुक्थम्—इति वि०।

† छ० आ० १, १, १, ५ (१भा० १००पृ०) = ऋ० वे० ६, ६, ५, १ = य० वे० १२, ५१।

अथ द्वितीया ।

३ १ २ १२ १ १ ३ २ ३ १ २ ३ २
कविमिवप्रशꣳस्यंयन्देवासइतिद्विता ।
१२ ३२ ३ १
निमर्त्त्येष्वादधुः ॥ २ * ॥

हे "देवासः" देवाः इन्द्रादयः ! "यम्" अग्निं "मर्त्त्येषु" मनुष्येषु "इति" वक्ष्यमाण-प्रकारेण "द्विता" द्विधा† "न्यादधुः" गार्हपत्याहवनीयात्मकत्वेन द्विधा निहितवन्तः । तत्र दृष्टान्तः—"कविमिव" "प्रशंस्यं" प्रशंसनार्हं क्रान्त-कर्माणं पुरुषं यथा द्विधा कार्यद्वये अन्यो नियोजयति तद्वत् [ यद्वा दिवि पृथिव्यां च निहितवन्तः, भूमौ तु हविराहरणार्थं दिवि तु हविः प्रदानार्थमिति द्वैधं निधानं कृतवन्त इत्यर्थः ] । तमग्निं स्तुषे इति पूर्वेण सम्बन्धः ॥

"प्रशंस्यं"-"प्रचेतसं"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ १ १ १ १ १ ३ १२ १२
त्वंयविष्ठदाशुषोनॄꣳःपाहिशृणुहीगिरः ।
१ २ ३ २ ३ १२ १२
रक्षातोकमुतत्मना ॥ ३ ‡ ॥ १८

* ऋ० वे० ६, ६, ५, २ ।

† 'द्विता नाम ऋषिः'—इति वि० ।

‡ ऋ० वे० ६, २, ५, ३ ।

हे "यविष्ठ" युवतम! [यद्वा, यौतेस्तृजन्तस्य इष्ठनि* रूपं देवानां हविषां मिश्रयितृतम!] इन्द्र! त्वं "दाशुषः" हविर्दत्तवतः "नॄन्" कर्मणां नेतॄन् यजमानान् "पाहि" धनानां दानेन रक्ष [नॄःपाहीत्यत्र संहितायां "नॄन्पे (८, ३, १०)"—इति नकारस्य रुत्वम्, "अत्रानुनासिक (८, ३, २)"—इति पूर्वस्यानुनासिकः। किञ्च, "गिरः" त्वद्विषयाः स्तुतीः "शृणुहि"† अवहितः सन् शृणु। "उत" अपिच "त्मना"‡ आत्मनैव "तोकम्" अस्मदीयं "तनयं" पुत्रं "रक्ष"¶ पालय [त्मनेति सर्वत्र सम्बध्यते—आत्मना स्वयमेव रक्ष, त्वदन्य पालयितारं न विन्दामः त्वमेवास्मदीयम्॥

"शृणुही"-"शृणुधि"—इति पाठौ॥३॥१८

१र२ १ २
॥गायत्रौशनम्॥ प्रेष्ठंवाः। अता २ ३ यिथीम्।
१र र २ १ २ १ २ २ १
स्तौषेमित्रम्। इवप्रा२३याम्। अग्ने्वरा३था३म्। ना
२ १ ५ ५ १ २ १ २
वा२३हा३४३यिदा२३४यो६हायि॥(१) कविमिवा। प्र
१ २ १ र २र १ २ १
शं्ऽसा२३याम्। यान्देवासः। इतिद्वा२३यिता। नि

* "तुम्छन्दसि"—इति पा० ५, ३, ५९।

† "शृणुही"—इति दीर्घः संहितायाम्।

‡ "मन्त्रेष्वाङ्यादेरात्मनः"—इति पा० ६, ४, १४१।

¶ संहितायान्तु "रक्षा"—दीर्घान्तः, तत्र द्व्यच इति दीर्घः।

२ २ १ २ १ ५ ५
मात्तो३ये३ । षूवा२३हा३४३यि । दा२३४धोई्हा ॥(२)

१र १ २१र २ १ र २ १र
तुवंयवायि । ष्ठहाप्रू२३षाः । नूडपाहिष्ट । णुद्योगा

२ १ २ २ १ २
२३यिराः । रक्षातो३का३म् । ऊता२३हा ३ ४ ३यि ।

१ ५ ५
त्मा२३४नोई्हायि(३) ॥ ११ * ॥ [१] १८

अथ त्र्यचात्मके द्वितीय-सूक्ते —

प्रथमा ।

१ २ ३ १ २
एन्द्रनोगधिप्रियसत्राजिदगोह्य ।

३ २उ ३ १ २ ३ १र ३र ३ २
गिरिर्नविश्वतःपृथुःपतिर्दिवः ॥ १ † ॥

हे "प्रिय" स्तोतॄणां प्रीणनकर! "सत्राजित्"‡ महतां शत्रूणां जेतः! हे "अगोह्य" केनापि गुहितुमशक्य! "इन्द्र!" "गिरिर्न" पर्वत इव¶ "विश्वतः" सर्वतः "पृथुः" पृथुतमः "दिवः" स्वर्गस्य "पतिः" ईश्वरस्त्वं "नः" अस्मान् "आगधि" आगच्छ ॥

---

* क० गा० ५प्र० १अ० ११सा० ।

† छ० आ० ५, १, १, ३ (१भा० ८०७पृ०) = ऋ० वे० ६, ७, १, ४ ।

‡ 'सत्राजित् — सदाजेता' — इति वि० ।

¶ 'गिरिर्मेघः अन्तरिक्षव्यापी अथवा गिरयः पर्वताः — इति वि० ।

"प्रियसत्राजिदगोह्य"-"प्रियःसत्राजिदगोह्यः"—इति पाठौ, "विश्वतःश्रणु"*-"विश्वतस्पृथुः"—इति च ॥ १ ॥

अथ द्वितीया।

२ १र २र ३ २ ३ १ ३ १ २
अभिहिसत्यसोमपाउभेबभूथरोदसी।
१र २र ३ २ ३ १र २र ३ २
इन्द्रासिसुन्वतोवृधोपतिर्द्दिवः ॥ २ † ॥

हे सत्य! "सोमपाः" सोमस्य पातः! "इन्द्र!" यस्त्वम् "उभे" "रोदसी" द्यावापृथिव्यौ "अभि बभूथ" सामर्थ्येनाभिभवसि स त्वं "सुन्वतः" सोमाभिषवं कुर्वतः यजमानस्य "वृधः" वर्धकः "असि"। "दिवः" स्वर्गस्यापि "पतिः" ईश्वरोऽसि ॥२॥

अथ तृतीया।

१र २र ३ १ २ ३ १ २ १र २र
त्वꣳहिशश्वतीनामिन्द्रदर्त्ताꣳ‡पुरामसि।
३ २उ ३ १ २ ३ १र २र ३ २
हन्तादस्योर्मनोर्वृधःपतिर्द्दिवः ॥ ३ ¶ ॥ १९

---

* नैष पाठः क्वचिदप्युपलभ्यते।

† ऋ० वे० ६, ७, १, ५।

‡ "धर्त्ता"—इति मु०-पाठः सायणसम्मतश्च परं बहुपुस्तकविरोधात् पदादिग्रन्थेऽपि दर्त्तशब्दस्यैवोपेक्षणीयत्व।

¶ ऋ० वे० ६, ७, १, ६।

हे "इन्द्र !" "त्वं" "शश्वतीनां" बह्वीनां "पुरां" शत्रुनगरीणां "धर्त्ता असि हि" दारयिता भवसि खलु। किञ्च, "दस्योः" वृथाकालस्योपक्षेपयितुरसुरस्य "हन्ता" असि घातको भवसि "मनोः" मनुष्यस्य यागादि कुर्वतो "वृधः" वर्द्धकश्चासि। "दिवः" स्वर्गस्यापि "पतिः" ईश्वरोऽसि ॥ ३ ॥ १९

॥ साम्बर्त्तम् ॥ एन्द्रनो३गधिप्राया। सात्राजित्। अगोहायौ। हो३वा। गिरायिन्नवौ। हो३वा। श्वताः। पार्य्यू२३४औहोवा ॥(१) अभिहिसा२त्यसोमायाः। ऊभेबभू। थरोदासौ। हो ३ वा। इन्द्रासिसौ। हो३वा। न्वतः। वार२र्द्धा२ ३ ४औहोवा ॥(२) तुवꣳहिशा२श्वतायिनाम्। आयिन्द्रदर्त्ता। पुरामासौ। हो३वा। हन्तादस्यौ। हो३वा। मनोः। वार२र्द्धा२ ३४औहोवा। पतिर्दिवा१ः(३) ॥ १२ * ॥ [१] १९

* ऊ० गा० ५प्र० १अ० १२सा०।

अथ तृचात्मके तृतीय-सूक्ते*—

प्रथमा ।

३ २   ३ १र   २र ३ १र   २र   १
पुराम्भिन्दुर्युवाकविरमितौजा अजायत ।
१ ३   १   २ ३ १ २   ३ २   ३ १ २   ३ २
इन्द्रोविश्वस्यकर्म्मणोधर्त्तावाजीपुरुष्टुतः ॥ १ † ॥

अयम् "इन्द्रः" उच्यमान-गुणयुक्तो "अजायत" सम्पन्नः । कीदृग्गुणकः ? इति तदुच्यते—"पुराम्" असुर-पुराणां "भिन्दुः" भेत्ता "युवा" कदाचिदपि बली-पलितादि-वार्द्धक्य-रहितः "कविः" मेधावी "अमितौजाः" प्रभूत-बलः विश्वस्य कर्मणः कृत्स्नस्य ज्योतिष्टोमादेः "धर्त्ता" पोषकः "वज्री" यजमान-रक्षणार्थं सर्वदा वज्रयुक्तः "पुरुष्टुतः" बहुविधे तत्तत्कर्मणि स्तुतः ॥ भिन्दुः—भिदिर् विदारणे ( रु० प० ), कुरित्यनुवृत्तौ "पृ-भिदि-व्यधि-गृधि-धृषिभ्यः (उ० १, २३)"—इति कु-प्रत्ययः, तस्य "छन्दस्युभयथा (३,४,११७)"—इति सार्वधातुक-सञ्ज्ञायां "रुधादिभ्यः श्नम् ( ३, १, ७८ )" मित्त्वादन्त्यादचः परो भवति, "श्नसोरल्लोपः (६,४,१११)" अनुस्वार-परसवर्णौ "अचः परस्मिन् पूर्वविधौ ( १, १, ५७ )"—इति प्राप्तस्य स्थानिवद्भावस्य "न पदान्तेत्यादिना (१, १, ५८) निषेधः । युवा—यु मिश्रणा-मिश्रणयोः ( अदा० प० ) "कनिन्युवृषितक्षिराजिधन्विद्युप्रति-

* 'मारुतं साम'—इति वि० ।

† छ० आ० ४, २, २, ८, ( १भा० ७३३प० )=ऋ० वे० १, ११, ४ ।

दिवः (उ० १,१५४)'—इति कनिन् नित्त्वादाद्युदात्तः (६, १, १९७)। कविः—कु शब्दे (अदा० प०) "अचइरिति(उ०४,१३८) इः प्रत्ययस्वरः (३,१,३)। अमितः—अमित-शब्दस्याव्ययपूर्व-पदप्रकृतिस्वरम् (८,२,१) "बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन" तदेव शिष्यते। विश्वस्य—"अशूप्रुषीत्यादिना (उ०१,१४९) क्वन्, नित्त्वा-दाद्युदात्तः (६,१,१९७)। कर्मणा—अन्येभ्योऽपि दृश्यन्ते (३,२, ७५)"—इति मनिन् नित्स्वरः (६, १, १९७)। धर्त्ता—टच्, कित्त्वादन्तोदात्तः (६,१,१६५)। वज्री—मत्वर्थीय इनौ (५, २, १२२), प्रत्यय स्वरः। पुरुष्टुतः—"स्तुतस्तोमयोश्छन्दसि (८,३, १०५)"—इति षत्वम् बहुषु प्रदेशेषु स्तुतः "गाथवत्थाज-विचकाणाम् (६, २, १४४)"—इत्यन्तोदात्तत्वम्, तृतीया-समासे हि थाथादिस्वरापवादः, "तृतीया कर्मणि (६, २, ४८)"—इति पूर्वपदप्रकृतिस्वरः स्यात् ॥ १ ॥

अथ द्वितीया ।

१ ३२ ३ २ ३ १ २ ३ १ २
त्वंवलस्यगोमतोवावरद्रिवोबिलम् ।

१ ३ १२ २२ ३ १ २
त्वान्देवाअभिभ्युषस्तुज्यमानासआविषुः ॥ २ * ॥

[ वलनामकः† कश्चिदसुरो देवसम्बन्धिनीर्गा अपहृत्य कस्मिंश्चिद् बिले गोपितवान् तदानीमिन्द्रस्तद्बिलं समाहृत्य

* ऋ० वे० १, २१, ५ ।

† 'बलोनाम दानवः, तमसापिधान आसीत्' —इत्यादि वि० ।

तस्माद् बिलाद् गाः निःसारयामास, तदिदमुपाख्यान मिन्द्रो बलस्य बलमौर्गौरित्यादि ब्राह्मणेषु मन्त्रान्तरेषु च प्रसिद्धम्, तदेतद्हृदि निधायायं मन्त्रः प्रवर्त्तते—]हे "अद्रिवः" वज्रयुक्तेन्द्र! त्वं "गोमतः बलस्य" गोभिर्युक्तस्य बलनामकस्यासुरस्य सम्बन्धि "बिलम्" "अपावः" स्वसैन्य-मुखेनापाहृतवानसि। तदानीं "तुज्यमानासः" बलेन हिंस्यमानाः "देवाः" "अबिभ्युषः" त्वद्-यया रक्षया बलाद्भीताः सन्तः "त्वामाविषुः" प्राप्तवन्तः। अपेत्यस्य निपातत्वादाद्युदात्तत्वम्(फि० ४,१२)। अवः—वृञ् वरणे (स्वा० उ०), लङ् सिप्, "इतश्च लोपः (३,४,९७)", "स्वादिभ्यः श्नुः (३, १, ७३)", तस्य बहुलंछन्दसि (२, ४, ७६)"—इति लुक्, गुणो रपरत्वम्, हल्ङ्यादि-लोपः, विसर्जनीयः, अडागमः। अद्रिवः—अद्रिरस्यास्तीति मतुप्, "छन्दसीरः (८,२, १८)"—इति वत्वम्, सम्बोधने "उगिदचामिति नुम् (७,१,७०), हल्ङ्याप्-संयोगान्त-लोपौ,"मतुवसो रुः सम्बुद्धौ छन्दसि (८,३,१)"—इति रुत्वम्। बिलं—"नब्विषयस्यानिसन्तस्येत्याद्युदात्तत्वम् (फि०२,३)। अबिभ्युषः—ञि भी भये(जुहो०प०)लिङ्, द्विर्भावः, अभ्यासस्य ह्रस्व-जश्त्वे,* "क्वसुश्च (३,२,१०७)"—इति लिटः क्वसुरादेशः, क्रादिनियमात्, प्राप्त इट् "वस्वेकाजाद्घसाम् (७, २, ६७)"—इति नियमान्निवर्त्तते, जसि सर्वनामस्थाने-

* "अबिभ्युषः"—इति पाठस्तु न सार्वत्रिकः, अस्मन्मुद्रितपुस्तके क-पुस्तके च "अभिभ्युषः"—इति दर्शनात्।

ऽपि व्यत्ययेन भत्वात् वसोः सम्प्रसारणम्, पर-पूर्वत्वम्, "शासि-वसिघसीनाञ्च (८,३,६०)"—इति षत्वम्, "अचि श्नु धातु-भ्रुवां य्वोरियङुवङौ" इत्यादिना (६, ४, ७७) प्राप्तमियङादेशं बाधित्वा "एरनेकाच (६, ४, ८२)"—इति यणादेशः, नञ्-समासः, अव्यय-पूर्वपद-प्रकृतिस्वरत्वम्। तुज्यमानासः—तुजेर्हिंसार्थात् परस्य कर्मणि लटः स्थाने शानच्, "सार्वधातुके यक् (३, १, ६७)"—इति यक् तस्मादुपदेशादुत्तरस्य लसार्वधातुकस्यानुदात्तत्वम् (६, १, १८६), यकएव प्रत्ययस्वरः शिष्यते। आविषुः—अव रक्षणादिषु, अस्मात् गत्यर्थाल्लुङि झिसस्य "सिजभ्यस्तविदि-भ्यश्च (३, ४, १०९)"—इति जुस्, सिच इडागमः, "आडजा-दीनाम् (६,४,७२)"—इत्याडागमः, "आदेश-प्रत्यययोः (८, ३, ५९)"—इति षत्वम्॥ २॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १र २र
इन्द्रमीशानमोजसाभिस्तोमैरनूषत।

१ २ ३ १ २ ३ १ २ ३ १ २ २ ३ १ २
सहस्रंयस्यरातयउतवासन्तिभूयसीः॥ ३ *॥ २०

"स्तोतारः" "ओजसा" बलेन "ईशानं" जगतो नियामकम् "इन्द्रम्" स्तोमैः" तृचादिभिः "अभ्यनूषत" सर्वत्र स्तुवन्ति। "यस्य" इन्द्रस्य "रातयः" धन-दानानि "सहस्र" सहस्र-सङ्ख्यो-

* ऋ० वे० १, १, ११, ८

येतानि सन्ति "उत वा" अथवा "भूयसीः"* सहस्र-सङ्ख्याकाः अप्यधिकाः "सन्ति"। तमिन्द्रमिति पूर्वेणान्वयः॥

"स्तोमैः"-"स्तोमाः"—इति पाठौ॥

इन्द्रम्—"ऋज्रेन्द्रे त्यादिना रन् (उ०२,२८), नित्त्वादाद्युदात्तः (६,१,१९७)। ईशानम्—लटः शानच् (३,२,१२४), "अदिप्रभृतिभ्यः शपः (२,४,७२)"—इति धातोरनुदात्तेत्त्वात् तास्यनुदात्तेदित्यादिना (६, १, १८६) शानचोऽनुदात्तत्वम्। ओजसा—नब्विषयत्वादाद्युदात्तः (फि० २, ३)। स्तोमैः—अर्त्ति-स्तुस्वित्यादिना (उ०१,१३७) मन् प्रत्ययः, नित्त्वादाद्युदात्तः (६, १, १९७)। अनूषत— णु स्तुतौ; "णो नः (६,१,६५), लङ् व्यत्ययेन, झः, तस्य अदादेशः, "च्लेः सिच् (३, १, ४४), अस्य धातोः कुटादित्वेन सिचो ङित्त्वाद् (१, २, १) गुणाभावः, इडभावश्छान्दसः, अडागमः। सहस्र—"कर्दमादीनाञ्च (फि० ३, ११)"—इति द्वितीयाच्चरमुदात्तम्। रातयः—"मन्त्रे वृषेत्यादिना (३,३,९६) क्तिन उदात्तः। उत—प्रातिपदिक-स्वरः (फि०१,१)। वा—चादिरनुदात्तः (फि०४,१६)। सति—प्रत्ययाद्युदात्तत्वम्, (३, १, ३), "तिङतिङः (८, १, २८)"—इति निघातो न भवति "यद्वृत्तान्नित्यम् (८, १, ६६)"—

---

* 'भूयसीः रातयस्त्वन्तुष्टवन्' —इति वि०।

इति प्रतिषेधात्, नहि व्यवहितेऽपि भवतीत्युक्तम्। भूयसीः— सहस्रादतिशयेन बह्व्यः भूयस्यः, अत्र विभक्तस्य सहस्रस्य सन्निधिबलात् उपपदत्व-प्रतीतेर्द्विवचनं विभज्योपपदे तरबीयसुनाविति बहुशब्दादीयसुन्, "बहोर्लोपो भू च बहोः (६,४,१५८)"—इति इकार-लोपः, बहोर्भूइत्यादेशश्च, ईयसुनो निच्वादाद्युदात्तत्व, "उगितश्च (४, १, ६)"—इति ङीप्॥ ३ ॥ २०

॥ मारुतम् ॥ पुराम्भिदुयुवाकवीः। अमितौजाश्च जाया२३ता। आयिन्द्रोविश्वा३। स्याकर्म्मा२३४णाः। धर्त्ता। वाज्रौवाओ२३४वा। पुरुपुष्टु ताः ॥(१) तुव म्बलस्यगोमताः। अपावरद्रिवोबा२३यिलाम्। त्वा न्देवाः। आबिभ्यू२३४षाः। तुज्या। मानौवाओ२३४वा। सत्रा५विषूः ॥(२) इन्द्रमीशानमोजसा। अभिस्तो मैरनूषा२३ता। माहस्रन्बा३। स्याराता२३४याः। उता। वासौवाओ२३४वा। तिभू५यसीः। हो५ई। डा(३)॥१३*॥

* ऊ० गा० ५प्र० १अ० १३सा०।

॥ महावैश्वामित्रम् * ॥ हयायि । हयाउ । ओहा
ओहा । हयायि । हयाउ । ओहाओहा । हयायि ।
हयाउ । ओहाओहा । पुराम्भिन्दूः । युवाकावी२ः ।
अमितौजाः । अजायाता२ । इन्द्रोविश्वा । स्यकर्म्मा
णा२ः । धर्त्तावज्री । पुरुष्टुता२ः ॥(१) तुवम्बला । स्य
गोमाता२ः । अपावरा । द्रिवोवायिला२म् । तुवा
न्देवाः । अबिभ्यूषा२ः । तुज्यमाना । सआवायिषू२ ॥(२)
इन्द्रमीशा । नमोजासा२ । अभिस्तोमैः । अनूषाता
२ । सहस्रंया । स्यरातायार्२ः । उतवासा । तिभूया
सी२ः । हयायि । हयाउ । ओहाओहा । हयायि ।
हयाउ । ओहाओहा । हयायि । हयाउ । ओहाओ

* "वैश्वामित्रम्"—इति स्व० पु० पाठः ।

५ २ ५ २ ५ १

हा । हो४इंडा । हो४इडा । हो२३४५ई ।

डा(३) ॥ २० * ॥ [२] २०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य
नवमः खण्डः† ॥ ९ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ९ ॥

॥ इति पञ्चमस्यार्द्धः प्रपाठकः ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे नवमोऽध्यायः‡ ॥ ९ ॥

---

* ऊ० गा० १२प्र० २अ० १०सा० ।

† 'अष्टमखण्डः समाप्तम्'—इति वि० ।

‡ 'पञ्चमस्य प्रपाठकस्य प्रथमोऽध्यायः समाप्तः'—इति वि० ।

यस्य निःश्वसितं वेदा यो वेदेभ्यो ऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १० ॥

॥ अथ दशमोऽध्याय आरभ्यते* ॥

तत्र,

अक्रान्त्समुद्र इति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २   ३ १ २ ३ १र  १र
अक्रान्त्समुद्रः प्रथमे विधर्म्म
३ १ २ ३ १र  २र  ३ २
ञ्जनयन्प्रजा भुवनस्य गोपाः ।
१ २ ३ २ ३ २ ३ २ ३ १ २
वृषा पवित्रे अधिसानो अव्ये
३ १र  २र  ३ १र  २र
बृहत्सोमो वावृधे स्वानो अद्रिः ॥ १ † ॥

"समुद्रः" [ यस्मादापः सन्द्रवन्ति स समुद्रः ] अपां वर्षकः, "गोपाः" स्वामित्वेन सर्वस्य रक्षकः सोमः "प्रथमे" विस्तृते "भुव-

---

* 'इदानीं नवमसप्तः षट्चत्वारिंशमुच्यते। तत्र च ब्राह्मणेन गायत्र-प्रभृतीनां साम्नामार्षेयमुक्तम्'—इति वि० ।

† ऋ० आ० ६, १, ४, ७ (२भा० ११२पृ०) = ऋ० सं० १७, ४, १८, ५ ।

नस्य” उदकस्य “वि धर्म्मन्” विधारकेऽन्तरिक्षे प्रजाः “जनयन्” उत्पादयन् “अक्रान्” सर्वमभिक्रामति [क्रमतेर्लुङि तिपोऽभावे वृद्धौ च कृतायां सिज्लोपे मकारस्य “मोनोधातोः (८, २, ६४)”—इति नकारे रूपम् ]; “वृषा” कामानां वर्षिता, “स्वानः” अभिषूयमाणः, “अद्रिः” आदरणशीलः, “सः” सोमः अधिकं “सानौ” समुच्छ्रिते अविभवे पवित्रे “बृहत्” प्रभूतं “वक्षे” वर्द्धते ॥

“गोपाः”-“राजा”—इति पाठौ, “अद्रिः”-“इन्दुः”—इति च ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ २ ३ १ २ ३
मत्सिवायुमिष्टये राधसेनो

१ २ ३ १र २र ३ १ २
मत्सिमित्रावरुणापूयमानः।

२ ३ २ ३ १ २ ३ १ २ ३ २उ
मत्सिशर्द्धोमारुतम्मत्सिदेवान्

३ १ १ ३ १ २
मत्सिद्यावापृथिवीदेवसोम ॥ २ * ॥

हे सोम! त्वं वायुं “मत्सि” मादय। किमर्थम्? “नः” अस्माकम्† “इष्टये” ईषणीयाय अन्नाय “राधसे” धनाय च। तथा पवित्रेण पूयमानस्त्वं “मित्रावरुणा” मित्रावरुणौ च

* ऋ० वे० ७, ४, १९, २।

† ‘नः’—अस्माकम्’—इति वि०

"मत्सि" तर्पयसि । किञ्च "मारुतं" मरुतां सम्भूतं शब्दो बलञ्च मत्सि । तथा "देवान्" इन्द्रादीन् "मत्सि" हर्षय । हे "देव" स्तोतव्य ! हे सोम ! "द्यावापृथिव्यौ" च "मत्सि" मादय । एतान् हर्षयुक्तान् कृत्वा अस्मभ्यं धनं प्रयच्छेत्यर्थः ॥

"राधसेनः"-"राधसेच"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

३ १र २र ३ १ २ ३
महत्तत्सोमोमहिषश्चकारा
१र ३र ३ २
पांयद्गर्भोवृणीतदेवान् ।
१ २ ३ २ ३ १ २ ३ १र
अदधादिन्द्रे पवमानओजो
२र ३ २ ३ २ ३ १ २
जनयत्सूर्येज्योतिरिन्दुः ॥ ३ * ॥ १

"महिषः" महान् पूज्यो वा सोमः "महत्" प्रभूतं तत् कर्म "चकार" अकरोत् । किन्तत् कर्म ? "अपां गर्भः" उदकानां गर्भभूतः [ जनयितृत्वाज्जन्यत्वाच्च ] "सः" सोमः "देवान्" "आवृणीत" समभजत—इति यत् तत् कृतवानिति । किञ्च, "पवमानः" पूयमानः सोमः "ओजः" तत्पानेन जन्यं बलम् "इन्द्रे" "अदधात्" । तथा "इन्दुः" "सूर्य्यः" "ज्योतिः" तेजः "अजनयत्" ॥ ३ ॥ १

* छ० आ० ६, १, ३, ६ ( २आ० १४५४० ) = ऋ० वे० ७, ४, १९, १ ।

२ ३ ४
॥ ह्वाउक्रुवायिवासिष्ठम् ॥ हायि। उक्रुवायि। प्र

१ ३र ४र ५ १ २ १ २ ३ ४ ५ ३
क्रा३४औहोवा। समू। द्रा३:प्रथ। मेविधर्म्मान्। ज

२ ३र ४र ५ १ २ १ २ ३ ४ ५ ३
मा३४औहोवा। यन्प्रा। जा३भुव। नस्यगोपाः। वृ

१ ३र ४र ५ १ २ १ २ ३र ४ ५
षा३४औहोवा। पवायि। ते३अधि। सानोअव्यायि।

३ २ ३र ४र ५ १र १र १ र २ २
वृषा३४औहोवा। सोमो। वावृधे। स्वा३४३। नो३

४ ३ २ ३र ४र ५ १र २ १
आ५द्राइ५ईयिः ॥(१) मत्सा३४औहोवा। वायूम्। इष्ट

र २ ३ ४ ५ ३ २ ४ ३र ४र ५ १ २ १ र
येराधसेनाः। मत्सा ३ औहोवा। मित्रा। वरुणा।

२ ३ ४ ५ ३ २ ३र ४र ५ १ १र १ २
पूयमानाः। मत्सा३४औहोवा। शर्द्धो। मारुतम्। म

३ ४ ५ ३ २ ३र ४र ५ १र २ १ र २
त्सिदेवान्। मत्सा३४औहोवा। द्यावा। पृथिवी। दा

२ ४ ३ १ ३र ४र ५ १
३४३यि। वा३सो५मा६५६ ॥(२) महा३४औहोवा। त

२ १ १ २ ४ ५ ३ २ ३र ४र ५ १
त्सो। गो३महि। षश्चकारा। अपा३४औहोवा। य

२ १ २ ३ ४ ५ ३ २ ३र ४र ५ १र
त्रा। भो३भत्र। णीतदेवान्। अदा३४औहोवा। धा

दायि । द्रे३पव । मानश्रोजाः । हायि । उञ्जवायि ।

अजा३४औहोवा । नयात् । हरियि । ज्यो३४३ । ती

३रा५यिन्दू६५६ः(३) ॥ १ * ॥ [१]

॥ महासामराजम् ॥ हाउहोवा३हायि । आक्रान्

समुद्रा३प्र । थमे३वी३ । धर्म्मा२३४५न् । जनयन्प्रजा

३भू । वना३स्या३ । गोपा२३४५ ॥(१) वृषापवित्रे३धा ।

धिसा३नो३ । अव्या२३४५यि । बृहत्सोमो३वा । वृधे

सू३वा३ । नोअद्रा३२उ ॥(१) मत्सिवायू३मायि । इषे

रा३धा३ । सेना२३४५ः । मत्सिमित्रा३वा । रुणापू३या

३ । माना२३४५ः । मत्सिशर्द्धो३मा । रुतम्मा३सो३ ।

देवान्२३४५न् । मत्सिद्यावा३पा । थिवीदे३वा३ । सो

मा३२उ ॥(१) महत्तत्सोमो३मा । हिषा३श्चा । कारा

---

* ऊ० गा० १७९० १ष्य० १सा० ।

१ १ १ १ १ र ३र १ २ ४ ३र १ १ १ १ १
२३४५। अपांयद्गर्भो३अ। वृणी३ता३। देवा२३४पुन्।
२ र ३र १ २ ४ ३र २ १ १ १ १ १ ३र
अदधादिन्द्र३पा। वमा३ना३ः। ओजा२३४५ः। हा

र २ ३र १ ३र ४ २
उहोवा३हायि। अजनयत्सू३री। येज्यो३ती३ः। इ
१ १ १
न्दा३२उवा३४५(३)॥ ५ *॥[२]

२र र २ र
॥वैश्वज्योतिषोत्तरम्॥ हाउहोवा३हायि। अक्रा
२ ३ ४ २ र २
न्त्समुद्रः प्रथमे२४३विधर्म्मन्। जनयन्प्रजाभुवना ३ ४ ३स्य
३र ५र २र र २र ३ ५ २ र
गोपाः। वृषापवित्रे अधिसा३४३नो अव्यायि। बृहत्सो
र र र ३र ३ ५ ४र २
मोवावृधेसुवा३४३नो अद्रायि। नोआ५द्राउ॥(१) मत्सि
र र २३र५ २ र र २३र
वायुमिष्टये रा३४३ध तेनः। मत्सिमित्रावरुणापू३ ४ ३यमा
५ २ र र २ ३र५र २ र र
नः। मत्सिशर्द्धोमारुतम्मा३४३त्सिदेवान्। मत्सिद्यावा
र २ ३र ५ ४ २ र र
पृथिवीदे३४३वसोम। वसो५माउ॥(२) महत्तत्सोमो
२ ३र ५ र २ ३ ५
महिषा३४३श्चकारम्। अपांयद्गर्भोअवृणी३४३तदेवान्।

---

* ऋ० गा० २२प्र० २अ० ३सा०।

१ र र २ ३र ५ २र र २
अद्धादिन्द्र पवमा ३४३ नओजाः । द्धाउहोवा३हायि ।
र र २ ३ ५ ४
अजनयत्सूर्य्यं ज्यो ३ ४ ३ तिरिन्दुः । तिरा ५ यिन्दाउ ।
वा(३) ॥ ८* ॥ [३]

१ १र २ १ २ र
॥ वात्सप्रम् ॥ होई २ । ३ । अक्रान्त्समुद्रःप्रथ । मे
१ १ १ १ २ १र
विधार्म्मा २न् । धार्म्मा २न् । धार्म्मारन् । जनयन्प्रजा
२ १ १ १ १र १ २र १ २ १र
भुव । नस्यगोपा २ः । गोपा २ः । वृषापवित्र अधिसा ।
१र १ १ १ २ १ र
नोआव्या २यि । आव्या २यि । आव्या २यि । बृहत्सो
र २र र र र १ १ १
मोवावृधेसुवा । नोआद्रा २यि । आद्रा २यि । आद्रा
१ २र १ १ १ र २ १ १
२यि ॥(१) मत्सिवायुमिष्टये । राधसेना २ः । सेना २ ।
१ १ २ १र २ र र १ १
सेना २ः । मत्सिमित्रावरुणा । पूयमाना २ः । माना
१ १ २ १ २ र २ १
२ः । माना २ः । मत्सिशर्द्धोमारुतम् । मत्सिदेवा २
१ १ १ २ १र र २ १र २र
न् । देवा २न् । देवा २न् । मत्सिद्यावापृथिवी । देव

* ऊ० गा० ९प्र० १ख० ८सा० ।

१ १ १ २ १ १र १
सोमा२। सोमा२। सोमा२॥(२) महत्तत्सोमोम

१ १ १ २र २
हि। षश्वकारा२। कारा२। कारा२। अपायद्ग

र र १ १ १
र्भोश्रवृ। णीतदायिवा२न्। दायिवा२न्। दायिवा

१ २र १ २र १ २र १ १
२न्। अदधादिन्द्रे पव। मानओजा२ः। ओजा२ः।

१ १ २ १र २र १र २ १ १
ओजा२ः। अजनयत्सूर्य्येज्यो। तिरायिन्दू२ः। आ

१ १ १ २
यिन्दू२ः। आयिन्दू२ः। होई२। २। होया२। वा

५र र ३ १ १ १ १
२३४औहोवा। ई२३४५(३)॥ ६ *॥ [४] १

अथैषदेवइति दशर्चं द्वितीयं सूक्तम्

तत्र प्रथमा।

२ १ २ ३ १र २र २ १ २
एषदेवोअमर्त्यःपर्णवीरिवदीयते।

३ १र २र ३ १ २
अभिद्रोणान्यासदम्॥ १ †॥

"देवः" द्योतमानः "अमर्त्यः" मरण-रहितः "एषः" सोमः "द्रोणानि" द्रोणकलशान् "अभि" लक्ष्य "आसदम्" आसत्तुम्

* ऊ० गा० १३प्र० १अ० ६सा०।

† ऋ० वे० ६, ७, १०, १।

आसदनार्थम् "पर्णवीरिव"* यथा पची तथा वेगेन "दीयते" गच्छति ॥

"दीयते"-"दीयति"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

२ ३ १ २ ३ १ २ ३ २ ३ १ २ २
एषविप्रैरभिष्टुतोपोदेवोविगाहते ।

२ ३ १ २ ३ १ २
दधद्रत्नानिदाशुषे ॥ २ † ॥

"विप्रैः" मेधाविभिः स्तोतृभिः "अभिष्टुतः" आभिमुख्येन स्तुतः "देवः" द्योतमानः "एषः" सोमः "दाशुषे" हविषां प्रदात्रे यजमानाय "रत्नानि" रमणीयानि धनानि "दधत्" धारयत् प्रयच्छत्। "अपः" वसतीवरीः "वि गाहते" प्रविशति ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
एषविश्वानिवार्य्याशूरोयन्निवसत्वभिः ।

१ २
पवमानःसिषासति ॥ ३ ‡ ॥

---

* 'पर्णवीरिव—पर्णवानिव, पूतिका आर्पयवान् भवति, तथाप्येके अभिषव लिप्सन्ति समन्ततभिषूयमाणं पर्णवन्तं सोमं' -इत्यादि वि० ।

† ऋ० वे० ९, ७, १०, २ ।

‡ ऋ० वे० ९, ७, १० ३ ।

"पवमानः" पूयमानः "शूरः" वीरः "एषः" सोमः "विश्वानि" सर्वाणि "वार्या" वरणीयानि धनानि* "सत्वभिः" बलैः "यन्ति च" गच्छन्ति च "सिषासति" अस्मदर्थं सम्भक्तुमिच्छति ॥ ३ ॥

अथ चतुर्थी ।

२ ३ १ २ ३ १ २ ३ १ २
एषदेवोरथर्यतिपवमानोदिशस्यति ।
२ ३ १ २ ३ २
आविष्कृणोतिवग्वनुम् ॥ ४ † ॥

"पवमानः" अयमेव सोमो "देवः" "रथर्यति" अस्मदीयं यागं प्रत्यागमनाय रथं कामयते‡ ॥

"दिशस्यति"-"विशस्यति"—इति पाठौ ॥ ४ ॥

अथ पञ्चमी ।

२ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
एषदेवोविपन्युभिःपवमानऋतायुभिः ।
२ ३ १ २
हरिर्वाजायमृज्यते ॥ ५ ¶ ॥

* 'वार्या—उदकानि'—इति वि० ।

† ऋ० वे० ९, ३, २०, ४ ।

‡ 'रथर्यति—रथैर्याति'—इति वि० ।

¶ ऋ० वे० ९, ३, २०, ५ ।

"पवमानः" क्षरन् "एषः" "सोमः" "देवः" "विपन्युभिः" स्तोतृभिः "ऋतायुभिः" यज्ञ-कामैः सत्य-कामैर्वा* "हरिः" अश्वइव "वाजाय" सङ्ग्रामार्थं "मृज्यते" स्तुतिभिरलङ्क्रियते ॥५॥

अथ षष्ठी ।

३ २ ३ २ ३ २ ३ २ ३ १ २
एषदेवोविपाकृतोतिह्वराꣳसिधावति ।
१ २ ३ १ २
पवमानोअदाभ्यः ॥ ६ † ॥

"विपा" [—अङ्गुलिनामैतत् (निघ० २,५,८)] अङ्गुल्या "कृतः" अभिषुतः "एषः" सोमः "देवः" "पवमानः" क्षरन् "अदाभ्यः" केनाप्यहिंसितश्च सन् "ह्वरांसि" शत्रून् "वि धावति" हन्तुमभिगच्छति ॥ ६ ॥

अथ सप्तमी ।

३ २उ ३ १ ३ ३ १र २र ३ १ २
एषदिवंविधावतितिरोरजाꣳसिधारया ।
१ २ ३ १ २
पवमानःकनिक्रदत् ॥ ७ ‡ ॥

"धारया" "पवमानः" क्षरन् "एषः" सोमः "कनिक्रदन्" अभिषूयमाणः शब्दं कुर्वन् "रजांसि" लोकान् "तिरः" तिरस्कुर्वन् यज्ञात् "दिवं" स्वर्गं प्रति "वि धावति" ॥ ७ ॥

---

* 'ऋतायुभिः—ऋतो यज्ञः, तं युञ्जन्ति ऋतायवः ऋत्विजः तैः'—इति वि० ।

† ऋ० वे० ६, ७, २१, १ ।

‡ ऋ० वे० ६, ७, २१, २ ।

अथाष्टमी।

३ २उ ३ १ २ ३ २उ ३ १ २
एषदिवंव्यासरत्तिरोरजाᳬस्यस्तृतः।

१ २ ३ २
पवमानःस्वध्वरः॥८*॥

"पवमानः" क्षरन् "एषः" सोमः "स्वध्वरः" सुयज्ञः "अस्तृतः" केनाप्यहिंसितश्च सन् "रजांसि" लोकान्† "तिरः" तिरस्कुर्वन् यस्मात् "दिवं" प्रति "व्यासरत्" विसरति गच्छति ॥ ८ ॥

अथ नवमी।

३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
एषप्रत्नेनजन्मनादेवोदेवेभ्यःसुतः।

१ २ ३ १ २
हरिःपवित्रेअर्षति॥ ९ ‡॥

"हरिः" हरितवर्णः "देवः" द्योतमानः "एषः" सोमः "प्रत्नेन" पुराणेन "जन्मना" जननेन "देवेभ्यः" देवार्थं "सुतः" अभिषुतः सन् "पवित्रे" स्थातुम् "अर्षति" गच्छति ॥ ९ ॥

---

* ऋ० वे० ६, ७, ११, ३।

† 'रजांसि—त्रयो लोकास्तेषाम् अवत्तात् धावति'—इति वि०।

‡ इष च १,२,१७, १ (२भा० १६१४०) ऋ० वे० ६, ७, ११, ४।

अथ दशमी।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ १ २
एषउस्यपुरुव्रतोजज्ञानोजनयन्निषः।
१ २ ३ २
धारयापवतेसुतः॥ १० *॥ २

"एष उ स्यः" एष च स सोमः "पुरुव्रतः" बहुकर्मा "जज्ञानः" जायमान एव "इषः" अन्नानि "जनयन्" उत्पादयन् "सुतः" अभिषुतः "धारया" "पवते" क्षरति॥ १०॥ २

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य प्रथमः खण्डः† ॥ १॥

---

अथ द्वितीये खण्डे—एषधियेत्यष्टर्चं‡ सूक्तम्,

तत्र प्रथमा।

१ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
एषधियायात्यण्व्याशूरोरथेभिराशुभिः।
१ २ १ २ ३ २
गच्छन्निन्द्रस्यनिष्कृतम्॥ १ ¶॥

---

* ऋ० वे० ६, ७, ११, ५।

† 'उक्तो दशर्चः'—इति वि०।

‡ 'इदानीमष्टर्चः, इदानीं बह्वृचा भवन्ति, सप्तानुगमः बह्वृचः, तृच उत्तमः'—इति वि०।

¶ ऋ० वे० ६, ८, ५, १।

"एषः" सोमः "शूरः" विक्रान्तः "अण्व्या" अङ्गुल्या* अभिषुतः "धिया" कर्मणा अतिगच्छति। कीदृशम्? इति उच्यते —"इन्द्रस्य" "निष्कृतं" स्थानं स्वर्गाख्यं प्रति "आशुभिः" शीघ्रगामिभिः "रथेभिः" रथैः "गच्छन्" इन्द्रेण रथेऽवस्थाप्य स्व-स्थान-नयनाङ्गत्या अभिषूयमाणः सन् होम-द्वारा अग्निं गच्छतीत्यर्थः॥ १॥

अथ द्वितीया।

२ २ ३ २ १ ३ २ ३ १ २
एषपुरुधियायतेबृहतेदेवतातये।

२ ३ १ २ ३ १ २
यत्रामृतासआशत॥ २ †॥

"एषः" सोमः "पुरु" बहुलं, "धियायते" धियं कर्म इच्छति [धी-शब्दात् याकारोपजनः(७,१,३८)। यद्वा द्वितीयार्थे तृतीया, (३,१,८५)छान्दसश्चालुक्]। कस्मै? "बृहते" महते "देवतातये" यज्ञाय "यत्र" यस्मिन् यज्ञे "अमृतासः" अमृताः देवाः "आशत" व्याप्नुवन्ति तदर्थम्॥

"आशत"-"आसत"—इति पाठौ॥ २॥

---

* 'अण्व्या—सूक्ष्मतमया'—इति वि०।

† ऋ० वे० ६, ८, ५, २।

अथ तृतीया ।

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
एतम्मृजन्तिमर्ज्यमुपद्रोणेष्वायवः ।
३ २ ३ १र २र
प्रचक्राणम्महीरिषः ॥ ३ * ॥

"आयवः" मनुष्याः ऋत्विजः "एतं" सोमं "मर्ज्यम्" "उप मृजन्ति" निष्पीड़यन्तीत्यर्थः । कुत्र ? "द्रोणेषु" द्रोणकलशेषु । कीदृशम् ? "महीः इषः" महान्त्यन्नानि† "प्रचक्राणं" कुर्वाणं प्रभूत-रस-स्राविणमित्यर्थः ॥ ३ ॥

अथ चतुर्थी ।

३ २ ३ १र २र ३ १ ३ १ २ ३ १
एषहितोविनीयतेन्तःशुन्ध्यावतापथा ।
१ २ ३ २ ३ १ २
यदीतुञ्जन्तिभूर्णयः ॥ ४ ‡ ॥

"एषः" सोमः "हितः" निहितिः हविर्द्धाने "वि नीयते" तस्मात् स्थानात् आहवनीयं प्रति "अन्तः" तयोर्मध्यदेशे "शुन्ध्यावता" शुद्धिमता "पथा" मार्गेण "यदि" यदा "तुञ्जन्ति" प्रयच्छन्ति देवेभ्यः "भूर्णयः" भरणशीलाः¶ अध्वर्य्वादयः ; तदा विनीयत इति समन्वयः ॥

"शुन्ध्यावता"-"शुभ्रावता"—इति पाठौ ॥ ४ ॥

---

* ऋ० वे० ६, ८, ५, ७ ।

† 'इषः—धानाः, करम्भः, पुरोडाशः'—इति वि० ।

‡ ऋ० वे० ६, ८, ५, ३ ।

¶ 'भूर्णयः—भरणशीलाः'—इति वि० ।

अथ पञ्चमी।

३ १२ ३ १ २ ३ २ ३ १ २ ३ १ २
एषरश्मिभिरीयतेवाजीशुभ्रेभिरंशुभिः।
२ ३ १ २ ३ १ २
पतिःसिन्धूनाम्भवन् ॥ ५ * ॥

"एषः" सोमः "रश्मिभिः" अध्वर्य्यादिभिः† सह "ईयते" गच्छति। कीदृश एषः? "वाजी" वेगवान् "शुभ्रेभिः दीप्तैः अंशुभिर्विशिष्टः [अथवा रश्मिभिरित्येतदप्यंशु-विशेषणम्] "सिन्धूनां" स्यन्दमानानां रसानां "पतिः" "भवन्" भवतीति ॥ ५ ॥

अथ षष्ठी।

३ १र २र ३ १ २ १ २ ३ २ १ २
एषशृङ्गाणिदोधुवच्छिशीतेयूथ्योवृषा।
३ १र २र ३ १ २
नृम्णादधानओजसा ॥ ६ ‡ ॥

"एषः" सोमः "शृङ्गाणि"¶ शृङ्गवदुन्नतानंशून् अभिषवकाले "दोधुवत्" धुनोति "यूथ्यः" यूथार्हो यूथपतिः "वृषा" वृषभः यथा "शिशीते" तीक्ष्णे शृङ्गे धुनोति तद्वत्। कीदृशः? "ओजसा" बलेन "नृम्णा" नृम्णानि धनानि "दधानः" अस्मदर्थं धारयन् ॥ ६ ॥

---

* ऋ० वे० ६, ८, ५, ५।

† 'रश्मिभिः—सुवर्णरश्मैर्वल्गिभिः'—इति वि०। वस्तुतो रश्मी यजमानः, तदाह कात्यायनः—"रश्मि भवः पदं कुरुते स्तोरिति (१५, ५, १६)"—इत्याद्यनुसन्धेयम्। ‡ ऋ० वे० ६, ८, ५, ४।

¶ 'मज्जवत्सं हिमवन्नस्य स्थाने इढयम् शृङ्गं'—इति वि०।

अथ सप्तमी।

२ १र २र ३ १र २र ३ १र १र
एषवसूनिपिब्दनःपरुषाययिवाꣳअति।
२ ३ १ २
अवशादेषुगच्छति ॥ ७ * ॥

"वसूनि" आच्छादकानि रक्षांसि "पिब्दनः" पीडयन्† "एषः" सोमः "परुषा" पर्वणा "अति" अतिक्रम्य "ययिवान्" गच्छन् "शादेषु" शातनीयेषु रक्षःसु "अव गच्छति"‡ ॥

"पिब्दनः"-"पिब्दना"—इति पाठौ ॥ ७ ॥

अथाष्टमी।

३ २ ३ २उ १ २ ३ १ २ ३ १ २
एषमुत्यन्दशक्षिपोहरिꣳहिन्वन्तिपातवे।
२ १ ३ १ २
स्वायुधम्मदिन्तमम् ॥ ८ ¶ ॥ ३

"हरिं" हरितवर्णं "त्यं" तम् "एतम्" एतमेव§ सोमं "दश क्षिपः" दश-सङ्ख्याका अङ्गुलयः‖ "यातवे" गमनाय**

* ऋ० वे० ६, ८, ५, ६।

† 'पिब्दनः—पिबमानः, सोमलक्षणानि'—इति वि०।

‡ 'बलात्कारेण'—इति वि०।

¶ ऋ० वे० ६, ८, ५, ८।

§ 'उ—इति पदपूरणे'—इति वि०।

‖ 'दशक्षिपः—सर्वसमर्था अङ्गुल्यः'—इति वि०।

** 'यातवे—प्रापणार्थम्'—इति वि०।

"हिन्वन्ति" प्रेरयन्ति। कीदृशमेनम्? "स्वायुधं" शोभनायुधं* "मदिन्तमं" मादयितृतमं रक्षोहनन-प्रदर्शनाय स्वायुध-शब्द-श्रवणम्॥

"हरिंहिन्वन्तियातवे"-"मृजन्तिसमधीतयः"—इति पाठौ ॥ ८॥ ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य द्वितीयः खण्डः॥ २॥

---

अथ तृतीय-खण्डे—

एषउस्येति षडृचं सूक्तम्,

तत्र प्रथमा।

३ २ १ २उ ३ २उ ३ १ २
एषउस्यवृषारथोव्यावारेभिरव्यत।
२ ३ १ २ ३ १ २
गच्छन्वाज्ँसहस्रिणम्॥ १ †॥

"स्यः" सः प्रसिद्धः "एषः" अभिषुतः सोमः "वृषा" वर्षिता "रथः" रंहण-स्वभावः "अव्यावारेभिः" अवेर्वालैः दशापवित्रेण "अव्यत" द्रोणकलशं प्रति गच्छति "वाजम्" अन्नम् "सहस्रिणं"

---

* 'स्वायुधं—शोभनैर्यैरायुधैर्युक्तम् अथवा परशु-पाश-प्रभृतिभिः'—इति वि०।

† ऋ० वे० ६, ८, २८, १।

सहस्र-सङ्ख्याकं यजमानाय प्रदातुं "गच्छन्" द्रोणकलशं प्रवि-
शन्नभ्यतेत्यर्थः* ॥

"अव्यावारेभिरव्यत"-"अव्योवारेभिरर्षति"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ २ १ २ ३ १ २ ३ १ २ ३ १ २
एतन्त्रितस्ययोषणोहरिंहिन्वन्त्यद्रिभिः ।

२ १ १ २ ३ १ २
इन्दुमिन्द्रायपीतये ॥ २ † ॥

"एतम्" "इन्दुं" "हरिं" हरितवर्णं सोमं "त्रितस्य" एतन्नामकस्य ऋषेः "योषणः" अङ्गुलयः‡ "अद्रिभिः" अभिषव-पाषाणैः "हिन्वन्ति" प्रेरयन्ति । किमर्थम्? "इन्द्राय" इन्द्रस्य "पीतये" पानाय ॥ २ ॥

अथ तृतीया ।

३ १ २र ३ २ ३ १उ ३ १ २
एषस्यमानुषीष्वाश्येनोनविक्षुसीदति ।

१ २ ३ २उ ३ १ २
गच्छञ्जारोनयोषितम् ॥ ३ ¶ ॥

"स्यः" सः "एषः" सोमः "मानुषीषु" "विक्षु" प्रजासु "श्येनो न" श्येनइव शीघ्रमागम्य यजमानरूपासु अनुग्रहेण "आ"

---

* अत्र ऋचि 'उ—इति पदपूरणः'—इति वि० ।

† ऋ० वे० ६, ८, २२, ३—९, ८, २८, २ ।

‡ 'योषणः—अङ्गुलयः'—इति वि० ।

¶ ऋ० वे० ६, ८, २८, ४ ।

आगत्य "सीदति"। पुनः कइव ? "योषितं" "गच्छन्" अभि-गच्छन् "जारो न" जार इव [स यथा सङ्केततः तस्याः काम-पूरणीय-गूढ़-गतिः तद्वदित्यर्थः] ॥ ३ ॥

अथ चतुर्थी ।

३ २उ ३ १ २र ३ १र २र
एषस्यमद्योरसोवचष्टे दिवःशिशुः ।
२उ ३ २ ३ १ २
यइन्दुर्वारमाविशत् ॥ ४ *† ॥

"स्यः" सः "एषः" "मद्यः" मद-निमित्तः "रसः" "अवचष्टे" सर्वमेव पश्यति "दिवः शिशुः" द्युलोकस्य पुत्रः [तत्रोत्पन्नत्वात् पुत्रत्वमस्य]। "यः" "इन्दुः" दीप्तः सोमः "वारं" दशापवित्रम् "आविशत्" आविशति स एष इति ॥ ४ ॥

अथ पञ्चमी ।

३ २उ ३ १ २ ३ १र २र ३ २
एषस्यपीतयेसुतोहरिरर्षतिधर्णसिः ।
२ ३ १ २ ३ २ ३ २
क्रन्दन्योनिमभिप्रियम् ॥ ५ ‡ ॥

"एषः" "स्यः" सः सोमः "पीतये" पानाय "सुतः" अभिषुतः "हरिः" हरितवर्णः "प्रियं" स्व-प्रियभूतं "योनिं" स्थानं द्रोणकलशं "क्रन्दन्" शब्दयन् "अभ्यर्षति" अभिगच्छति ॥ ५ ॥

---

* 'अवचष्टे—अवचरति, दिवः—द्युलोकात्, शिशुः—शंसनीयः'—इति वि० ।

† ऋ० वे० ९, ८, २८, ५ ।

‡ 'अभिप्रियम्—अभिरूपम्'—इति वि० ।

अथ षष्ठी ।

१ २ ३　३ १ ३ १ २　३ १ २　३ १ २
एतन्त्यꣳ हरितो दश मर्मृज्यन्ते अपस्युवः ।
२ ३ १ २ ३ १ २
याभिर्मदाय शुम्भते ॥ ६ * ॥ ४

"एतं" "त्यं" तं सोमम् अध्वर्योः "दश" "हरितः" हरणस्वभावाः अङ्गुलयः "अपस्युवः" कर्म्मेच्छवः सत्यः "मर्मृज्यन्ते" शोधयन्ति । "याभिः" अङ्गुलिभिरिन्द्रस्य "मदाय" "शुम्भते" दीप्यते शोध्यतइत्यर्थः ; तमेतमिति सम्बन्धः ॥ ७ ॥ ४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य
तृतीयः खण्डः ॥ ३ ॥

---

अथ चतुर्थ-खण्डे—

एषवाजीइति षड्चं सूक्तम्,

तत्र प्रथमा ।

३ २ ३ १ ३ १२ २२　३ १२ २२ ३ १ २
एष वाजी हितो नृभिः विश्वविन्मनसस्पतिः ।
२ ३ ३ ३ १ २
अव्यं वारं विधावति ॥ १ † ॥

---

* ऋ० वे० ९, ८, २८, ६ ।

† ऋ० वे० ९, ८, १८, १ ।

"एष:" सोम:, "वाजी" वेजन-शील:, "हित:" अध्वर्युणा पात्रे निहित: धृत:, "विश्ववित्" सर्वज्ञ:, "मनस:" स्तोत्रस्य "पति:" स्वामी [ अथवा सोमस्य मनोऽभिमानित्वात् मनस: स्वामित्वम्, "चन्द्रमा मनो भूत्वा हृदयं वा विशत्"—इति श्रुते: ; तादृशोऽसौ ] "अव्यं वारं" अवि-सम्बन्धिनं वालं दशापवित्रं "वि धावति" विविधं गच्छति ॥

"अव्यम्"-"अव्ये"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

३ २ ३ १ २    ३ १ २ ३ १ ३ १ २
एषपवित्रेअक्षरत्सोमोदेवेभ्य:सुत:।
२ ३ १ २    ३ २
विश्वाधामान्याविशन्॥ २ * ॥

"एष:" सोम: "देवेभ्य:" देवार्थं "सुत:" अभिषुत: सन् पवित्रे "अक्षरन्" स्रवन् "विश्वा" सर्वाणि "धामानि" देव-शरीराणि "आ विशन्" प्रविशन् प्रवेष्टुमित्यर्थ: ॥ २ ॥

अथ तृतीया।

३ २ ३ १ २    ३ २ ३ १ ३ १ २
एषदेव:शुभायतेधियोनावमर्त्त्य:।
२ १ २ ३ १ २
वृत्रहादेववीतम:॥ ३ † ॥

---

* ऋ० वे० ६, ८, १८, २।

† ऋ० वे० ६, ८, १८, ३।

"एषः" सोमः "देवः" "शुभायते"*। कुत्र? "अधियोनौ" स्वीये स्थाने†। कीदृशएषः? "अमर्त्त्यः" अमरणधर्म्मा "वृत्रहा" शत्रु-हन्ता "देववीतमः" अतिशयेन देवानां कामयिता‡ ॥ ३ ॥

अथ चतुर्थी।

२ ३उ १ २ १ २ ३ १ २ ३ १ २ ३ २
एषवृषाकनिक्रदद्दशभिर्ज्जामिभिर्यतः।
२ १ २र
अभिद्रोणानिधावति॥ ४ ¶ ॥

"वृषा" कामानां वर्षिता "एषः" सोमः "कनिक्रदत्" शब्दं कुर्व्वन् "दशभिः" "जामिभिः" अङ्गुलिभिः "यतः" धृतः§ "द्रोणानि" द्रुममयानि पात्राणि "अभि धावति" अभिगच्छति ॥ ४ ॥

अथ पञ्चमी।

२ १ २र २ १ २ ३ २ ३ १ २
एषसूर्य्यमरोचयत्पवमानोअधिद्यवि।
३ १ २ ३ १र २र
पवित्रेमत्सरोमदः॥ ५ ‖ ॥

---

* 'शुभायते—शुभं करोति'—इति वि०।

† 'अधियोनौ—योनिर्द्रोणकलशः'—इति वि०।

‡ 'देववीतमः—देवानां भक्ततमः, अथवा'—इत्यादि वि०।

¶ ऋ० वे० ६, ८, १८, ४।

§ 'जामिभिः—जामयो भगिन्यः अङ्गुल्यः ताभिर्यतः संयतः बद्ध इत्यर्थः—इति वि०।

‖ ऋ० वे० ६, ८, १८, ५।

"पवमानः" पूयमानः "एषः" सोमः "अधि दिवि" द्युलोके स्थितं "सूर्यं" "रोचयत्" रोचयति । कीदृशः ? "पवित्रे" स्वयं दशापवित्रे स्थितः, "मत्सरः" मद-हेतु प्राप्तः, "मदः" हृष्टः ॥

"अधिद्यवि । पवित्रेमत्सरोमदः"—"विचर्षणि । विश्वा धामानिविश्ववित्"—इति पाठौ ॥ ५ ॥

अथ षष्ठी ।

२१ ३२ ३ १ २ ३ १ २
एषसूर्य्येणहासतेसंवसानोविवस्वता ।
१ २ ३ १२ ३२
पतिर्वाचोअदाभ्यः ॥ ६ * ॥ ५

"एषः" सोमः "संवसानः" सर्वमप्याच्छादयन् "विवस्वता" दीप्तिमता† "सूर्येण" "हासते" परित्यज्यते पवित्रइति शेषः । कीदृशः ? "वाचः" स्तुति-लक्षणायाः "पतिः" पालकः स्वामी वा‡ "अदाभ्यः" केनाप्यहिंस्यः ॥ ६ ॥ ५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वितीयस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

* ऋ० वे० ६, ८, १७, ५ ।

† 'विवस्वता—सर्वेषाम् तेजसा'—इति वि० ।

‡ 'पतिर्वाचः—लौकिकाः वैदिकाश्च, तासां स्वामी'—इति वि० ।

अथ पञ्चम-खण्डे—

एषकविरिति षडृचं सूक्तम्,—

तत्र प्रथमा ।

२ २ ३ २ ३ १ २ २ ३ ३ १ २
एषकविरभिष्टुतःपवित्रेअधितोशत ।
२ २उ ३ १ २
पुनानोघ्नन्नपद्विषः ॥ १ * ॥

"एषः" सोमः "कविः" मेधावी "अभिष्टुतः" अभितःस्तुतः† "पवित्रे अधि" दशापवित्रे अधि दशापवित्रमतीत्य "तोशते" [यद्यपि तोशतिर्वधकर्मा तथाहि हनने गति-सद्भावात् अत्र गतिमात्रे वर्त्तते] गच्छतीत्यर्थः‡ [अथवा "पवित्रे अधि" कृष्णाजिने "तोशते" हन्यते पीड्यत इत्यर्थः] किङ्कुर्वन्? "पुनानः" पूयमानः "द्विषः" शत्रून् "अपघ्नन्" अपगमयन ॥

"द्विषः"-"स्रिधः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

२ १ १र ३ १ २ ३ १र २र
एषइन्द्रायवायवेस्वर्जित्परिषिच्यते ।
३ १ २ ३ १ २
पवित्रेदक्षसाधनः ॥ २ ¶ ॥

---

* ऋ० वे० ६, ८, १७, १ ।

† 'सोमकर्मैः'—इति वि० ।

‡ 'तोशते—तुशी दीप्तौ दीप्यते'—इति वि० ।

¶ ऋ० वे० ६, ८, १७, २ ।

"एषः" सोमः "स्वर्जित्" स्वर्गस्य सर्वस्य वा जेता "इन्द्राय" "वायवे" च "पवित्रे" "परिषिच्यते" परिस्राव्यते। कीदृशएषः? "दृषसाधनः" बलकारी ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १
एषनृभिर्विनीयतेदिवोमूर्द्धावृषासुतः।
२ ३ १ २ ३ २
सोमोवनेषुविश्ववित् ॥ ३ * ॥

"एषः" सोमः "नृभिः" कर्म-नेतृभिः ऋत्विग्भिः "विनीयते" विविधं नीयते। कीदृशः? "दिवः" द्युलोकस्य "मूर्द्धा" शिरोवत् प्रधानभूतः "वृषा" अभिमत-वर्षकः "सुतः" अभिषुतः। कुत्र नीयते? "वनेषु" वननीयेषु पात्रेषु वन-सम्भूत-द्रुम-विकारेषु वा पात्रेषु† "विश्ववित्" सर्वज्ञ एष इति समन्वयः ॥ ३ ॥

अथ चतुर्थी।

२ १ २ १ २ ३ १ २ १ २
एषगव्युरचिक्रदत्पवमानोहिरण्ययुः।
१ २ ३ १ २ २ ३
इन्दुःसत्राजिदास्तृतः ॥ ४ ‡ ॥

"एषः" सोमः "पवमानः" पूयमानः "अचिक्रदत्" शब्दं करोति। कथम्भूतः सन्? "गव्युः" अस्माकं गा इच्छन्

* ऋ० वे० ९, ८, १७, ३।

† 'वनेषु—उदकेषु'—इति वि०।

‡ ऋ० वे० ९, ८, १७, ४।

"हिरण्ययुः" हिरण्यानीच्छन् "इन्दुः" दीप्तः सन्, "सत्राजित्" महतः अत्रोरसुरादेर्जेता, * "अस्तृतः" स्वयमन्यैरहिंस्यश्च सन् ॥ ४ ॥

अथ पञ्चमी ।

३ २ ३क २र　　३ १　२ ३ २ ३ १ २
एषशुष्म्यसिष्यददन्तरिक्षेवृषाहरिः ।
३　२उ ३ २ ३ २
पुनानइन्दुरिन्द्रमा ॥ ५ † ॥

"शुष्मी" बलवान् सोमः "अन्तरिक्षे" दशापवित्रे "असिष्यदत्" स्यन्दते‡ । कीदृशएषः? "वृषा" वर्षकः, "हरिः" हरितवर्णः, "पुनानः" पूयमानः, "इन्दुः" दीप्तः, सएव "इन्द्रम्" इन्द्रञ्चापि; गच्छतीति शेषः । "आ"—इति चार्थे¶ ॥ ५ ॥

अथ षष्ठी ।

३ २ ३　१　२　३　१　२　　३ १ २
एषशुष्म्यदाभ्यःसोमःपुनानोअर्षति ।
३　१ २　　३ २
देवावीरघशꣳसहा ॥ ६ § ॥ ६

"एषः" सोमः "शुष्मी" बलवान् "अदाभ्यः" अदम्भनीयः अहिंसनीयः "पुनानः" पूयमानः "अर्षति" गच्छति "देवावीः"

---

* 'सत्राजित्—सहसा जेता अथवा सत्राजित्—सदाजित'—इति वि० ।

† ऋ० वे० ६, ८, १७, ६ ।

‡ 'असिष्यदत्—सीदति'—इति वि० ।

¶ 'आ—आनुपूर्व्येण'—इति वि० ।

§ ऋ० वे० ६, ८, १८, ६ ।

देवानामविता* "अघशंसहा" अघान् शंसन्तीत्यघशंसाः तेषां वा हन्ता† ॥ ६ ॥ ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

अथ षष्ठे खण्डे—

सस्तुतःपीतयइति षडृचं सूक्तम्,

तत्र प्रथमा।

२ ३ २ ३ १ २ ३ २ ३ १र २ ३ १ २
ससुतःपीतयेवृषासोमःपवित्रेअर्षति।

२ १र २र ३ १
विघ्नन्रक्षांसिदेवयुः ॥ १ ‡ ॥

"सः" सोमः "पीतये" इन्द्रादिपानाय "सुतः" अभिषुतः "वृषा" वर्षणः सन् "पवित्रे" "अर्षति" गच्छति। किङ्कुर्वन्? "रक्षांसि" "निघ्नन्"। "देवयुः" देवकामः। स इत्यन्वयः ॥ १ ॥

---

* 'देवावीः—देवानां भक्षभूतः'—इति वि०।

† 'अघं पापं यः शंसति सः अघशंसः, तस्य हन्ता'—इति वि०।

‡ ऋ० वे० ९, ८, २७, १।

अथ द्वितीया ।

१ २ १ २　३ १र २र　३ २
सपवित्रेविचक्षणोहरिरर्षतिधर्णसिः ।
३ २उ　३ १ २
अभियोनिङ्कनिक्रदत् ॥ २ * ॥

"सः" सोमः "विचक्षणः" [ पश्यति-कर्मैतत् ( निघ० ३, ११, ३)] सर्वस्य द्रष्टा "हरिः" हरितवर्णः सोमः "धर्णसिः" सर्वस्य धारकः "पवित्रे" "अर्षति" गच्छति, पश्चात् "कनिक्रदन्" शब्दं कुर्वन् "योनिं" स्थानं द्रोणकलशम् "अभि" गच्छति † ॥ २ ॥

अथ तृतीया ।

२ ३ १ १ १ २ ३ १र २र　३ १ २
सवाजीरोचनन्दिवःपवमानोविधावति ।
३ १र २र ३ १ २
रक्षोहावारमव्ययम् ॥ ३ ‡ ॥

"सः" "वाजी" वेजनवान् ¶ अश्व-स्थानीयः "दिवः" "रोचनं" रोचकः "पवमानः" पूयमानः "विधावति" । कीदृशः? "रक्षोहाः" रक्षसां हन्ता, "अव्ययं वारं" दशापवित्रम् अतीत्य विधावति विविधं गच्छति ॥

"रोचनं"-"रोचना"—इति पाठौ ॥ ३ ॥

---

* ऋ० वे० ६, ८, २७, २ ।

† कर्मोत्सुपसर्गदृष्टा क्रियापदावृत्तिः ।

‡ ऋ० वे० ६, ८, २७, ३ ।

¶ 'वाजी—बलवान्'—इति वि० ।

अथ चतुर्थी।

२ ३ २उ ३ १ २ ३ १ २
सन्नितस्याधिसानविपवमानोअरोचयत्।
३ १ २ ३ १ २ ३ २
जामिभिःसूर्य्यꣳसह ॥ ४ * ॥

"सः" सोमः "त्रितस्य" महर्षेः "अधिसानवि" समुच्छ्रिते यज्ञे† [ अधीति सप्तम्यर्थानुवादी ] "पवमानः" पूयमानः "जामिभिः" प्रहृद्धैः बन्धुभूतैर्वा सुतेजोभिः ‡ "सह" सहितः सन् "सूर्य्यम्" "अरोचयत्" प्रकाशितवान् ॥ ४ ॥

अथ पञ्चमी।

१ २ ३ १ २ २ २ ३ १ २ ३ १ २र
सवृत्रहावृषासुतोवरिवोविददाभ्यः।
२ ३ १ २
सोमोवाजमिवासरत् ॥ ५ ¶ ॥

"सः" सोमः "वृत्रहा" शत्रूणां हन्ता "वृषा" वर्षकः "सुतः" अभिषुतः "वरिवोवित्" § यष्टुर्धनस्य लम्भकः "अदाभ्यः"

---

* ऋ० वे० ६, ८, २७, ४।

† 'त्रितस्याधिसानवि—त्रितस्यार्थे, अधिसानवि प्रवे स्थाने'—इति वि०।

‡ 'जामिभिः—भगिनीभिः'—इति वि०।

¶ ऋ० वे० ६, ८, २७, ५।

§ 'वरिवोभजः'—इति वि०।

अन्यैरहिंसनीयः ; एवङ्गुणः सन् "वाजमिव" सङ्ग्रामाश्वइव * "असरट्" गच्छति कलशम् ॥ ५ ॥

अथ षष्ठी ।

२ ३ १   २ १ २ ३ २   १२   १२
सदेवःकविनेषितोऽभिद्रोणानिधावति ।
२ ३ १ २   ३   १ २
इन्दुरिन्द्रायमंहयन् ॥ ६ † ॥ ७

"सः" सोमः "देवः" "इन्दुः" क्लिद्यमानः "कविना" आक्रान्तप्रज्ञेनाध्वर्युणा ‡ "इषितः" प्रेरितः ¶ सन् "द्रोणानि" द्रोणकलशान् § "अभि धावति" अभिगच्छति । किङ्कुर्वन्? "इन्द्राय" इन्द्रं "मंहयन्" स्वकीय-रसेन पूजयन् ॥

"मंहयन्"-"मंहना"—इति पाठौ ॥ ६ ॥ ७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

* 'वाजम्—अश्वम्, इव असरत्'—इति वि० ।

† ऋ० वे० ६, ८, २७, ६ ।

‡ 'कविना—ब्रह्मणा'—इति वि० ।

¶ 'इषितः—क्षिप्तः'—इति वि० ।

§ 'द्रोणानि—द्रोण-कलश-सम्बन्धानि पात्राणि'—इति वि० ।

अथ सप्तम-खण्डे—

यःपावमानीरिति षडृचं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ २ ३ १र २र ३ १ २ ३ १ २
यःपावमानीरध्येत्यृषिभिःसम्भृतꣳरसम् ।

१ ३ २ ३ १ २ ३ १ २ ३ १ २
सर्वꣳसपूतमश्नातिस्वदितम्मातरिश्वना ॥ १ * ॥

"यः" जनः "पावमानीः पवमान-देवताकाः †" सर्वाऋचः तद्रूपं "ऋषिभिः" सूक्तद्रष्टृभिः मधुच्छन्दःप्रभृतिभिः "सम्भृतं" सम्पादितं "रसं" वेदसारभूतं ‡ पावमानं सूक्तसङ्घं यः "अध्येति,"¶ "सः" जनः "सर्वं" भोज्यजातं "पूतं" परिशुद्धमेव "अश्नाति" भक्षयति § कथमस्य पूतत्वम् ? तत्राह—स्वाध्यायनात् प्रागेव "मातरिश्वना" [मातरि अन्तरिक्षे श्वसितीति मातरिश्वा वायुः, स च पवित्रमेव] पवित्रेण वायुना "स्वदितं" स्वादूकृतं परिपूतमेवान्नं पश्चात् स नरोऽश्नाति ॥ १ ॥

* ऋ० वे० ७, १, १८, ६ ।

† 'पावमान्यश्च या सोमदेवत्यः ऋचः त्रिष्वपि पवमानेषु, तासामिह सम्प्रति आख्यायते—यः पावमानीरध्येतीति'—इति वि० ।

‡ 'रसं—वीर्यम्'—इति वि० ।

¶ 'यः अध्येति तस्य किं फलं भवति? सर्वं स पूतम् अश्नाति, यत् किञ्चित् खादति तत् पूतं भवति'—इति वि० ।

§ 'अध्ययनमात्र आर्षच्छन्दोदैवतब्राह्मणैः सहितं परिज्ञानं प्रशस्यते'—इति वि० ।

अथ द्वितीया ।

३ २उ ३ १र २र ३ १ २ ३ १ २
पावमानीर्यो अध्येत्यृषिभिः सम्भृतꣳरसम् ।
२ ३ १ २ ३ २ ३ १र २र ३ २
तस्मै सरस्वती दुहे क्षीरꣳसर्पिर्मधूदकम् ॥ २ * ॥

"यः" ब्राह्मणः "पावमानीः" पवमान-देवताका ऋचः "ऋषिभिः" मधुच्छन्दःप्रभृतिभिर्मन्त्रद्रष्टृभिः "सम्भृतं रसं" वेद-सारं सूक्तसङ्घम् "अध्येति" अधीते, "तस्मै" पवमानाध्ययनं कुर्वते जनाय "सरस्वती" सर्वत्र सरणवती वाग्देवता † "क्षीरं" यज्ञ-साधनं पयः, "सर्पिः" ताद्दशं घृतं "मधु" मदकरम् "उदकं" सोमं "दुहे" स्वयमेव दुग्धे यागादि-पर-वेदशास्त्रं विदं करोतीत्यर्थः ‡ [दुह प्रपूरणे (अदा० प०) कर्मकर्त्तरि "न दुह-स्नु-नमाम् (३, १, ८९)"—इत्यादिना यकः प्रतिषेधः, "लोपस्त आत्मनेपदेषु (७, १, ४१)"—इति त-लोपः ॥ २ ॥

अथ तृतीया ।

३ ३ १ २ ३ २ ३ १ २ ३ १ २
पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः ।
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
ऋषिभिस्सम्भृतो रसो ब्राह्मणेष्वमृतꣳहितम् ॥ ३¶ ॥

---

* ऋ० वे० ७, १, १८, ७ ।

† 'सरस्वती—वाग्रूपा'—इति वि० ।

‡ 'क्षीरं, सर्पिः, मधु, उदकम्—एतानि रसवन्ति द्रव्याणि तस्य सम्पद्यन्ते'—इति वि० ।   ¶ ऋ० वे० ७, १, ५, १ ।

याः पावमान्य ऋचः ताः "स्वस्त्ययनीः" क्षेम-प्रापिकाः "सु-दुघाः" सुष्ठु फलं दुहानाः "घृतश्चुतः" * [घृतं श्चोतन्ति चार-यन्तीति घृतश्चुतः ईदृग्भूताः] अस्माननुगृह्णन्त्विति शेषः। "ऋषिभिः" मन्त्र-दर्शिभिर्मुनिभिः "रसः" फलसारः "सम्भृतः" अस्मासु सम्पादितः "ब्राह्मणेषु" ब्रह्माणो मन्त्राः तत्पाठकाः ब्राह्मणाः, तेष्वस्मासु † "अमृतम्" अविनाश-बलं "हितं" सम्पादितम् ॥ ३ ॥

अथ चतुर्थी।

पावमानीर्द्दधन्तु न इमं लोकमथो अमुम्।
कामान्त्समर्द्धयन्तु नो देवीर्द्देवैःसमाहृताः ॥ ४ ‡ ॥

"देवैः" इन्द्रादिभिः "समाहृताः" सम्पादिताः "पावमानीः देवीः" पवमान-मन्त्राभिमानिनी देव्यः "नः" अस्माकम् "इमम्" ईदृग्भूतं "लोकं" भूलोकम् "अथो" अपि च "अमुं" स्वर्ग-लोकं "दधन्तु" प्रयच्छन्तु। तत्रत्यान् "कामान्" च "नः" अस्मदर्थं "समर्द्धयन्तु" समृद्धान् कुर्वन्तु ॥ ४ ॥

---

* 'घृतश्चुतः—घृतस्राविणः, अथवा घृतमुदकं तत् श्रवन्ति, कामवर्षी पर्जन्यो भवति'—इति वि०।

† 'ब्राह्मणेषु—अधिकरणभूतेषु'—इति वि०।

‡ ऋ० वे० ७, २, ५, २।

अथ पञ्चमी।

१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
येनदेवाःपवित्रेणात्मानम्पुनतेसदा।
१ २ ३ १ २ ३ १ २
तेनसहस्रधारेणपावमानीःपुनन्तुनः॥ ५ * ॥

"देवाः" इन्द्राद्याः "येन" पवित्रेण शुद्धि-साधनेन "सदा" "आत्मानं" स्व-देहं पुनते शोधयन्ति, "सहस्रधारेण" सहस्रावान्तर-भेद-युक्तेन "तेन" साधनेन "पावमानीः" पावमान्य ऋचः "नः" अस्मान् "पुनन्तु" ॥ ५ ॥

अथ षष्ठी।

३ २ ३ १ २ ३ १ २ १ २
पावमानीःस्वस्त्ययनीस्ताभिर्गच्छतिनान्दनम्।
१ २ ३ १ २ ३ १ २
पुण्याꣳश्चभक्षान्भक्षयत्यमृतत्वञ्चगच्छति॥ ६† ॥ ८

"पावमानीः" पवमानः पावकः पूयमानो वा सोमः, तत्सम्बन्धिन्यस्तद्देवताका ऋचः पावमान्यस्ताः "स्वस्त्ययनीः" स्वस्तीत्यविनाश-नाम, तथाविध-फलस्य प्रापयित्र्यः, "ताभिः" उक्त-लक्षणाभिः पावमानीभिः, तत्पाठेन स्तोता "नान्दनं" ‡ नन्द-

* ऋ० वे० ७, २, ५, ३।

† ऋ० वे० ७, २, ५, १६।

‡ 'नान्दनं—पुत्र-वसु-धन-धान्यादिभिः'—इति वि०।

यति सुकृतिन इति नन्दनः स्वर्गः स एव नान्दनः [स्वार्थिकस्त-द्धित-प्रत्ययः] तम् "गच्छति" प्राप्नोति। किञ्चेह लोके "भद्रान्"* सुकृत-सम्पादितान् "भद्रान्" भक्षणीयान् भोगान् अन्न-पानादि-लक्षणान् "च" भक्षयति। किञ्च "अमृतत्वं च गच्छति" अमृतत्वं नाम सोमस्तञ्च प्राप्नोति॥ ६॥ ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य सप्तमः खण्डः† ॥ ७॥

---

अथाष्टमे खण्डे ‡—

अगन्मेति-तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१२ ३१र २र३१२३
अगन्ममहानमसायविष्ठं

२३ २३१२३ १२३२
योदीदायसमिद्धःस्वेदुरोणे।

---

* 'पुण्यान्—मन्त्रपूतान् अथवा धानाः करम्भः पुरोडाशः प्रतीवापः पयस्येति अथवा * * *)—इति वि०।

† 'उक्ताः पावमान्यः, उक्तश्च बहिष्पवमानं, नवमस्याङ्कः'—इति वि०।

‡ 'इदानीमाज्यानि भवन्ति'—इति वि०।

२ १ २ ३ १ २ ३ १ ३ १
चित्रभानुꣳरोदसीअन्तरुर्वी

२ ३ १ २ ३ १ २
स्वाहुतंविश्वतःप्रत्यञ्चम् ॥ १ * ॥

"यः" अग्निः "स्वे दुरोणे" आहवनीयाख्ये स्वे स्थाने "समिद्धः" काष्ठैः सम्यग्दीप्तः सन् "दीदाय" दीप्यते, तमिमं "यविष्ठ" युवतमम् "उर्वी" विस्तीर्णयोः "रोदसी" रोदस्योः द्यावा-पृथिव्योः "अन्तः" मध्ये अन्तरिक्षे "चित्रभानुं" चित्रकालं "स्वाहुतं" सुष्ठु आहुतिभिर्हुतं सन्तं "विश्वतः" सर्वतः "प्रत्यञ्चं" प्रतिगच्छन्तमग्निं "महा" महता "नमसा" नमस्कारेण "अगन्म" वयमुपगच्छामः ॥ १ ॥

अथ द्वितीया ।

२ ३ १र २र ३ १ २ ३ २
समह्नाविश्वादुरितानिसाह्वा

३ १ २ ३ २ ३ २ ३ १२
नग्निष्टवेदमआजातवेदाः ।

१ २ ३ १ २ ३ २
सनोरक्षिषद्दुरितादवद्या

३ १ २ ३ २ ३ १ २ ३ १ २
दस्मान्गृणतउतनोमघोनः ॥ २ † ॥

---

* ऋ० वे० ५, २, १५, १ ।

† ऋ० वे० ५, २, १५, २ ।

यः "अग्निः" "मह्ना" महत्त्वेन "विश्वा" विश्वानि "दुरिता" दुरितानि "साह्वान्" अभिभवन् "जातवेदाः" जात-धनः जात-प्रज्ञो वा "दमे" यज्ञगृहे "स्तवे" अस्माभिः स्तूयते, "सः" अग्निः "गृणतः" स्तुवतः "नः" अस्मान् "दुरितात्" पापात् "अवद्यात्" निन्दिताच्च कर्मणः "रक्षिषत्" रक्षतु। "उत" अपिच "मघोनः" हविष्मतः "नः" अस्मान् रक्षतु ॥ २ ॥

अथ तृतीया।

१ २र ३ २ ३ १ २ ३ १
त्वंवरुणउतमित्रोअग्नेत्वां

१ ३ २ ३ १ २
वर्द्धन्तिमतिभिर्वसिष्ठाः।

१र २र ३ १ २ ३ १
त्वेवसु*सुषणनानिसन्तुयूय

२ ३ २ ३ १ २
म्पातस्वस्तिभिःसदानः ॥ ३ † ॥ ८

हे "अग्ने!" "त्वं" "वरुणः" असि पापानां निवारको भवसि "उत" अपिच "मित्रः" असि, पुण्य-प्रापणे सखा भवसि। "वसिष्ठाः" एतन्नामका ऋषयः हे अग्ने! "त्वां" "मतिभिः" स्तुतिभिः "वर्द्धन्ति" वर्द्धयन्ति "त्वे" त्वयि विद्यमानानि "वसु" वसूनि "सुषणनानि" सुसम्भजनानि "सन्तु"। हे अग्ने! "यूयं"

---

* "वसु"—इति क०-मु०-पुस्तकयोः पाठः।

† ऋ० वे० ५, २, १५, ३।

त्वद्दायाः सर्वे देवाः "स्वस्तिभिः" क्षेमैः "नः" अस्मान् "सदा" सर्वदा "पात" रक्षत ॥ ३ ॥ ९

अथ तृचात्मके द्वितीय-सूक्ते—

तत्र प्रथमा ।

३ २उ ३ १र २र ३ १ २ ३ १ २
महाꣳइन्द्रोयओजसापर्ज्जन्योवृष्टिमाꣳइव ।
१ २ ३ १ २
स्तोमैर्वत्सस्यवावृधे ॥ १ * ॥

"यः" "इन्द्रः" "ओजसा" बलेन "महान्" सर्वेभ्योऽधिकः। क इव ? "वृष्टिमानिव" यथा वृष्ट्या युक्तः "पर्जन्यः" रसानां प्रार्जयिता देवः महान्, स इन्द्रः "वत्सस्य" पुत्र-स्थानीयस्य स्तोतुः वत्स-नाम्न एव वा ऋषेः "स्तोमैः" स्तोत्रैः "वावृधे" प्रवर्द्धते ॥ १ ॥

अथ द्वितीया ।

२ ३ २ ३ १र २र३ १ २ ३ २ ३ १ २
कण्वाइन्द्रंयदक्रतस्तोमैर्यज्ञस्यसाधनम् ।
३ १ २ ३ १ २
जामिब्रुवतआयुधा ॥ २ † ॥

"कण्वाः" [स्तोतृ-नामैतत् (निघ० ३,१५,७)] स्तोतारः कण्व-गोत्रा वा "इन्द्रं" "स्तोमैः" स्तोत्रैः "यज्ञस्य" यागस्य "साधनं"

---

* ऋ० वे० ५, ८, ९, १ = य० वे० ७, ४० ।

† ऋ० वे० ५, ८, ९, २ ।

साधयितारं निष्पादकं "यद्" यदा "अक्रत" अकुर्वत [ करोतेर्लुङि "मन्त्रे घसेति (२, ४, ८०) च्लेर्लुक्, तदानीं "आयुधा" शत्रूणां हिंसकानि बाणादीनि "जामि" * [अतिरेकनामैतत् ] अतिरिक्तम् अधिकं प्रयोजन-रहितं "ब्रुवते" कथयन्ति । "आयुधा" आयुधस्य सर्वस्य कार्य्यस्येन्द्रेण कृतत्वात् आयुधानि निःप्रयोजनानीत्यर्थः [ यद्वा, 'आयुधा' आयुधमायोधनशीलमिन्द्रं 'जामि' जामिं भ्रातरं 'ब्रुवते' वदन्ति ॥

"आयुधा"-"आयुधम्'—इति पाठौ ॥ २ ॥

अथ तृतीया ।

३ २ ३ २ ३ १ २ ३ १र २र ३ १ २
प्रजामृतस्यपिप्रतःप्रयद्भरन्तवह्नयः ।
१ २ ३ २ ३ १ २
विप्राऋतस्यवाहसा ॥ ३ † ॥ १०

"ऋतस्य" यज्ञस्य सत्यस्य वा "प्रजा" प्रकर्षेण जातमिन्द्रं "पिप्रतः" नभसः प्रदेशान् पूरयन्तः "वह्नयः" वाहका अश्वा "यद्" यदा "प्र भरन्त" प्रकर्षेण भरन्ति वहन्ति तदा "विप्राः" मेधाविनः

* 'जामि—जानामि'—इति वि० ।

† ऋ० वे० ५, ८, ९, २ ।

स्तोतारः "ऋतस्य" यज्ञस्य "वाहसा" प्रापकेण स्तोत्रेण तम् इन्द्रं स्तुवन्तीति शेषः ॥ ३ ॥ १०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य

अष्टमः खण्डः * ॥ ८ ॥

---

अथ नवमे खण्डे †—

पवमानस्येति तृचात्मकं प्रथमं सूक्तम्, ‡

तत्र प्रथमा ।

१२ ३ १२ ३ १२ ३ १ २

पवमानस्य जिघ्नतो हरेश्चन्द्रा असृक्षत ।

३ १ २ ३ १ २

जीरा अजिर¶ शोचिषः ॥ १ § ॥

"जिघ्नतः" पुनः पुनः तमांसि विनाशयतः‖ "हरेः" हरित-वर्णस्य "अजिरशोचिषः" सर्वत्र-गमन-शील-तेजसः "पव-

---

* 'उक्तान्याख्यानि'—इति वि० ।

† 'इदानीं माध्यन्दिनः पवमानः'—इति वि० ।

‡ 'उत्तराद्दाराम्रतप्रभृतीनि सामानि नाकुणीक्तार्षाणि'—इति वि० ।

¶ "अजीर"—इति ख० पु० पाठः ।

§ ऋ० वे ७, २, ११, ५ ।

‖ 'जिघ्नतः—घ्नयमानस्य'—इति वि० ।

मानस्य" "चन्द्राः" [ चदि आह्लादे (भ्वा० प०)] देवानामाह्ला-दयितारः "जीराः" चिप्रं चरण-शीलाः * धाराः "असृचत" सृजन्ति पवित्रान्निर्गच्छन्तीत्यर्थः ॥

"जिघ्नतः"-"जङ्घ्नतः"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१ १ ३ १ २ ३ १ २ ३ १ २
पवमानोरथीतमःशुभ्रेभिःशुभ्रशस्तमः।
१ २ ३ १ २
हरिश्चन्द्रोमरुद्गणः ॥ २ † ॥

"पवमानः" देवः "रथीतमः" अतिशयेन रथवान् [ "छन्द-सीनः (८,२,१७ वा०)"—इतीकारः। तथा "शुभ्रेभिः" शोभा-युक्तेभ्यस्तेजोभ्योऽपि "शुभ्रशस्तमः" अत्यन्तं दीप्यमानश्च [यद्वा, निर्मलतम-यशोयुक्तः ] "हरिश्चन्द्रः" [ "ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे (६,१,१५१)"—इति सांहितिकः सुट्] हरित-वर्ण-दीप्तिः हरित-धारा-युक्तो वा "मरुद्गणः" मरुतो यस्य गणाः सहाय-भूताः स तथोक्तः तादृशः सोमः सर्वान् स्व-रश्मिभिः व्याप्नोतित्युत्तरेण सम्बन्धः ॥ २ ॥

---

* 'जीराः—जीरणात्मकाः'—इति वि०।

† ऋ० वे० ७, २, १२, १।

अथ तृतीया ।

१ २    ३ २र    ३ १ २    ३ १ २
पवमानव्यश्नुहिरश्मिभिर्वाजसातमः ।
१ २ ३ २ ३ १ २
दधत्स्तोत्रे सुवीर्य्यम् ॥ ३ * ॥ ११

हे "पवमान" सोम! त्वं "रश्मिभिः" स्व-दीप्तिभिः "व्यश्नुहि" सर्वं जगद् व्याप्नुहि। कीदृशस्त्वम्? "वाजसातमः" अतिशयेनान्नस्य दाता बलस्य सम्भक्ता वा तथा "स्तोत्रे" पवमानं स्तोत्रं कुर्वते जनाय "सुवीर्य्यं" शोभन-वीर्य्योपेतं पुत्रं धनं वा "दधत्" विदधत् प्रयच्छत् व्याप्नुहि ॥

"पवमानव्यश्नुहि"-"पवमानोव्यश्नवत्"—इति पाठौ ॥ ३ ॥ ११

अथ तृचात्मके द्वितीय-सूक्ते—

प्रथमा ।

२ ३ १ २    ३ २उ    २ १ २ ३ २    ३ २
परीतोषिञ्चतासुतꣳसोमोयउत्तमꣳहविः ।
३ १र    २र ३ २    २उ ३ २ १ २ ३ १ २
दधन्वाꣳयोनर्य्योअप्स्वाऽ३ऽन्तरासुषावसोममद्रिभिः ॥१†॥

हे ऋत्विजः! "सुतम्" अभिषुतं सोमम् "इतः" अस्मात् कर्म्मण ऊर्द्धम् अथवा अस्मात् प्रदेशात् ऊर्द्धं "परिषिञ्चत" वसतीवरीभिः [ इतोषिञ्चतेत्यत्र संहितायां छान्दसं रो रुत्वम्, आदेश-

---

* ऋ० वे० ७, २, १२, २ ।

† ऋ० ब्रा० ६, १, ३, २ ( २भा० ७७ पृ० ) = ऋ० वे० ७, ५, १२, १ ।

प्रत्यययोरिति षत्वम् ] "यः" "सोमः" देवानाम् "उत्तमं" प्रशंस्यं "हविः" भवति "आ" अपिच "नर्यः" मनुष्य-हितः यश्च सोमः "अप्सु" वसतीवरीषु अन्तरिक्षे वा "अन्तर्" "दधन्वान्" गच्छन् भवन् भवति तं "सोमम्" "अद्रिभिः" ग्रावभिः अध्वर्युः "सुषाव" अभिषुतं चकार ; तं परिषिञ्चतेति समन्वयः ॥ १ ॥

अथ द्वितीया।

२ १ २ २ १ २ २ १ २ ३ १ २ ३ १ २

नूनम्पुनानोविभिःपरिस्रवादब्धःसुरभिन्तरः।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २

सुतेचित्वाप्सुमदामोअन्धसाश्रीणन्तोगोभिरुत्तरम् ॥२*॥

हे सोम! "अदब्धः" कैश्चिदप्यहिंसितः "सुरभितरः" अत्यन्तं सुगन्धि त्वं "नूनम्" इदानीं "पुनानः" पूयमानः "अविभिः" अवि-वाल-कृतैः पवित्रैः "परिस्रव" परिक्षर "सुते चित्"† अभिषुते सति "अन्धसा" भक्त-लक्षणेनान्नेन "गोभिः" गोविकारैः क्षीरादिभिः "श्रीणन्तः" मिश्रयन्तः वयम् "उत्तरम्" उद्गततरम् ‡ "अप्सु" वसतीवरीषु स्थितं "त्वा" त्वां "मदामः" मदामहे ॥ २ ॥

---

* ऋ० वे० ७, ५, १२, २।

† 'चित्—इति पदपूरणः'—इति वि०।

‡ 'उत्तरम्—उत्तरेषु सवनेषु'—इति वि०।

अथ अध्यास्यरूपा तृतीया ।

१२ ३१र २र　२१ २३ ३१ १ २　३ २
परिस्वान*श्चक्षसेदेवमादनःक्रतुरिन्दुर्विचक्षणः ॥३†॥ १२

"स्वानः" सुतः अभिषूयमाणः सोमः "चक्षसे" ‡ सर्वेषां दर्शनाय "परि" स्रवति। कीदृशः ? "देवमादनः" देवानां तर्पयिता, "क्रतुः" कर्त्ता, ¶ "इन्दुः" पात्रेषु चरण-शीलः दीप्तो वा, "विचक्षणः" "सर्वस्य" विद्रष्टा ॥ ३ ॥ १२

५ ४　२र ३ ४ र ५　१र र
॥ पृष्ठम् ॥ परा३यितोषिञ्चतासुताम् । सोमोयउत्त

१　२ १र र र
मꣳहवार३यिर्हाइया । दधन्वाꣳयोनर्यो अप्सुवन्तरा२३

१　११र　२　१　२
होइया । सुषावा२३सो । ममद्रा२३यिभा३४३यिः ॥(१)

५ ४　२ ३र ४　५　१ र र　१
सुषा३वसोममद्रिभायिः । सुषावसोममद्रिभा२३यिर्हो

२र १र र　१　२ १
इया । नूम्पुनानोअविभिःपरिस्रवा२३होइया । अदब्धा

१　१　२　५ ४　२ ३४　५
२३ःस्व । रभिन्तार२३रा३४३ः ॥(२) अदा३ब्धःसुरभिन्तराः ।

* "सुवान"—इति ऋ० पाठः ।

† ऋ० वे० ७, ५, १२, ३ ।

‡ 'चक्षसे—चक्षाय'—इति वि० ।

¶ 'क्रतुः—यज्ञः'—इति वि० ।

१ १ २१र र र
अदब्ध सुरभिन्तरा२३होइया। सुतेचित्त्वाप्सुमदामोअ

१ १र१ २ १ २
न्धसा२३होइया। श्रीणन्तो२३गो। भिरुत्ता२ ३रा ३ ४

१
३म्। औ२३४५ई। डा॥ १ *॥ [१]

५४ २ ४ ५र ५र १र
॥ कौल्मलबर्हिषम्॥ परा३यितो३षिञ्चनासुताम्। सो

र २ र र २ २
मोयउत्तमा२९होवा२ ३ ४ यिः। दधन्वा९योनर्य्योआ।

२१ १ र र २ १ ५
एहोयि। प्स्व२अन्तरा। सुषावसोममोवा३औ२३४वा।

४ ५ ५४ २ ४र ५ २
द्रा५यिभोईहायि॥(१) सुषा३वा३सोममद्रिभायिः। सु

२ र १ २र र र १ २
षावसोममा२द्रायिभा२ ३ ४यिः। नूनम्पुनानोअवायिभा

र १ १ २ १
यिः। ऐहोयि। पा२रिस्रवा। अदब्धःसुरभोवा३ओ

५ ४ ५ ५ ४ र ४ ५
२३४वा। ता५रो६हायि॥(२) अदा३ब्धा३ःसुरभिन्तराः।

१ १ २र र १ २
अदब्धःसुरभा२यिन्तारा२ ३ ४ः। सुतेचित्त्वाप्सुमादा।

---

* ऊ० गा० ५प्र० २अ० २मा०।

१ र   १   र   र र   १ २ १
ऐहोयि । मो२अन्धसा । ओणन्तोगोभिरोवा३ओ२३४

५   ४   ५
वा । तापूरोऽ६हायि(३) ॥ २ * ॥ [२]

१ २र १र   २ र   १   १
॥ अर्कपुष्पाद्यम् ॥ परोतोषिञ्चतासुतम् । ऊवे२३ ।

१र २र १   २ १   २ १   २१र   र   र २ १
सोमोयउत्तमऽ६हविः । ऊवे२३ । दधन्वाऽ६योनर्योअप्स्

२ १र   २१र२१र २ १   २   १
वन्तरा । ऊवे२३ । सुषावसोममद्रिभिः । ऊवे२३ ॥(१)

२ १र२१र २ १   २   १   २ १र २१र २ १   २
सुषावसोममद्रिभिः । ऊवे२३ । सुषावसोममद्रिभिः ।

१   २र१   २र १र   २ १ २   २   १ २
ऊवे२३ । नूनम्पुनानोविभिःपरिस्रव । ऊवे२३ । अदब्धः

१ २   १   २ १ २
सुरभिन्तरः । ऊवे२३ ॥(२) अदब्धःसुरभिन्तरः । सुर

१   १ २ १ २   १
भिन्तरः । ऊवे२३ । अदब्धःसुरभिन्तरः । ऊवे २ ३ ।

२ १र   २र १   २र र १   २र   १   २र १ २र १र
सुतेचित्त्वाप्सुमदामोअन्धसा । ऊवे २ ३ । ओणन्तोगो

२ १   र   १   १   १ २ २
भिरुत्तरम् । ऊवे२३ । ऊवे२३ । होवा३हा३ । हा

* ऊ० गा० ५प्र० २ख० २सा० ।

५र र २ १र र र १र १ १ १ १
३४ । औ३होवा । अर्कोदिवाना२म्परमेविया२मा २ ३ ४
१
५न्(३) ॥ ३ * ॥ [३]

२ र १र र र र र २
॥ दैर्घश्रवसम् ॥ परीतोषिञ्चतासुतमोहाओहा३ए ।
१र १र १ २ १ २ १ ऽ २ ऽ २ २ ३ २
सोमोयउत्तम७ हविः । ओ३हा । ओ२हा३ए३४ । दधा
३र २ १ २ १ २ ऽ २
३४न्वा७ याः । नारियः । अप्सूअन्तरा । ओ ३ हा ।
ऽ २ २ २ २ ३ २ २ १ ५ ४
ओ२हा३ए३४ । सुषा३४वसो३ । ममो२३४वा । द्रा५
५ २ र र र र र २
यिभो६हायि ॥(१) सुषावसोममद्रिभिरोहाओहा३ए ।
२ १र १ १र २ १ २ ऽ २ ऽ २ २ ३र २
सुषावसोममद्रिभिः । ओ३हा । औ३हा३ए३४ । नूना
३ २ १ २ १ २ ऽ २ ऽ
३४म्पुना । नोअवि । भिःपारिस्रवा । ओ३हा । ओ३
२ २ ३ २ ३ २ र १ ५ ४
हा३ए३४ । अदा३४ब्धःसू३ । रभो२३४वा । ता५रो६
५ २ र र र २ १ १
हायि ॥(२) अदब्धःसुरभिन्तरओहाओहा३ए । अदब्धः
१ २ ऽ २ ऽ २ २ ३ २
सुरभिन्तरः । ओ३हा । ओ३हा३ए३४ । सुता३४यि

* ऊ० गा० ५प्र० २अ० ३सा० ।

३ २ १ २ २ १ २ ५ २ ५
चित्त्वा। आप्सुम। दामोअन्धसा। ओ३हा। ओ३

२ २ ३र २ ३र २ २ १ १ ४
हा३ए३४। औणा३४न्तोगो३। भिरो२३४वा। ताऽ५रो

५
६हायि(३)॥ ४ *॥ [४]

२ र र र १ २ र
॥ द्वनत्तरोवैयश्वम्॥ परीतोषिञ्चतासुताम। सो

१ २ र
मो। यउत्तमꣳहविः। दधान्वाꣳयार२ः। नर्यो अप्सु

र २ १ २
वन्तरा। सुषावा१सो२। ममद्रा२३यिभा३४३यिः॥(१)

२ र र १ २ र
सुषावसोममद्रायिभायिः। सुषा। वसोममद्रिभिः।

१ २ २ १ २
नूनाꣳपू१ना२। नोअविभिःपरिस्रव। अदाब्धा१ःसू२।

१ २ २ १ २
रभिन्ता२३रा३४३ः॥(२) अदब्धःसुरभिन्तारः। अदा।

१ २ र र
ब्धःसुरभिन्तरः। सुतायिचा१यित्वा२। अप्सुमदामो

र र १ २ १ २
अन्धसा। औणान्तो१गो२। भिरूत्ता२३रा ३ ४ ३म्।

१
ओ२३४५ई। डा(३)॥ ५ †॥ [५]

---

* ऊ० गा० ५प्र० २ख० ४सा०। † ऊ० गा० ५प्र० २ख० ५सा०।

२ र र र र
॥ आभीशवाद्यम्॥ परीतोषिञ्चतासुतम्। ए। सो
र ऽ १ ७ २ ३ ५ २ १र
मोयजउत्तामथ्हाविः। दा२३४धा। हायि। न्वाथ्
र र ७ २ ३ ५ २ १र २
योनर्व्योअप्सूअन्तारा। सू२३४षा। हायि। वासोम
१ ५ ४ ५ २र र
मो२३४वा। द्रा५यिभो६हायि॥(१) सुषावसोममद्रिभि
र र ऽ १ ७ २ ३ ५ २
रे। सुषावसो३मामद्रिभायिः। नू२३४नाम्। हायि।
१ र र ७ २ ३ ५ २ १
पुनानोअविभिःपारिस्रावा। आ२३४दा। हायि। अ्याः
२ १ ५ ४ ५ २
सूरभो२३४वा। ता५रो६हायि॥(२) अदब्धःसुरभिन्त
ऽ १ ७ २ ३ ५ २ १
रए। अदब्धःसू३राभिन्तारः। स्व२३४ते। हायि। चि
र र ७ २ ३ ५ २ १र
त्वाप्सुमदामोअन्धासा। आ२३४यिणा। हा। तोगो
२ १ ५ ४ ५
भिरो२३४वा। ता५रो६हायि(३)॥ ६ *॥ [६]

३ ४र ५र र २ २ ४र ५
॥ माधुच्छन्दसम्॥ परीतोषा। होयिः। चतासुता
५ २र १ २ १ २ ३ ५ २ १र र
६मे। सोमोयज। तामथ्हार२३४वोः। दधन्वाथ्योन

* ऊ० गा० ५प्र० १ख० ६सू० ।

र २ १ २ ३र २ ३र २ १ २
र्ध्यौ्अ। प्सु वान्तारा। औ्षो३४वाश्वायि। सुषावासो।
३र २ ३र २ १ २ १
औ्षो३४वाषा। ममद्रा२३यिभा३४३यिः। ओ२३४५
ई। डा(३)॥ ३ *॥ [७]

१ २१ २ १र
॥ ऐडमायास्यम् ॥ आयिपरायि। तोषायि। चता
र र २ २१ र
सुताम्। सोमोयऊ३१। तमऽ२्हवायिः। दाधन्वाऽ२
२ २१र २१ र २ २१
या३१ः। नर्थ्योअा। प्सुवन्तरा। सूषावसो३१। ममद्रा२३
२ १ २१ २१
यिभा३४३यिः ॥(१) आयिसुषा। वासो। ममद्रिभा
र २ २१ र
यिः। सूषावसो३१। ममद्रिभायिः। नूनम्पुना३१।
र २१ २ २१
नोअविभायिः। परिस्रवा। आदब्धःसू३१। रभिन्ता
२ १ २१ २१
२३रा३४३ः ॥(२) आअदा। ब्धाःसू। रभिन्तराः। आ
२ २१ र २
दब्धःसू३१। रभिन्तराः। सूतेचित्त्वा३१। प्सुमदा।

---

* ऊ० गा० ७प्र० १ख० ३सा०।

२र १ र र २ १ २
मोअन्धसा । आयिणन्तोगो२१ । भिरुत्ता२३रा३४३म् ।
१
ओ२३४५ई । डा(३) ॥ ४ * ॥ [८]

२ १ ४ र ५ १र २र
॥ पृश्नि ॥ परायितो२३षिञ्चतासुतꣳहाउ । सोमो
१ २ १ २ १ २ १ २ २
यउत्तमꣳहविः । दधन्वाꣳ१या २ ३ः । होवा३हायि ।
२ २र १ २ १ २ २ १
मारियोअ । सुवान्ता१रा२३ । होवा३हायि । सषा
२ १ २ २ १ २ १ २
वा१सो२३ । होवा३हा । मामद्रिभिः । इडा२३मा३४
१
३ । ओ२३४५ई । डा(१) ॥ २ † ॥ [९]

२ र र र
॥ अभीशवोत्तरम् ॥ परीतोषिञ्चतासुतम्ए । ए ।
र र १ ० २ ३ ५ २ २
सोमोयजऽ३त्तामꣳहाविः । दा२३४धा । हा३हायि ।
१र र र ० २ ३ ५ २ २ १र
न्वाꣳयोनर्य्योअप्सूअन्तारा । सू२३४षा । हा३हायि । वा
२ १र ५ ४ ५ २ र र
सोममो२३४वा । द्रा५यिभो६हायि ॥(१) सुषावसोम

---

* ऊ० गा० ७प्र० १ख० ४सा० ।

† ऊ० गा० ७प्र० २ख० ३सा० ।

र र ऽ १ ० २ ३
मद्रिभिरे। ए। सुषावसो३मामद्रि। भायिः। नू२३४
५ २ २ १ र र ० २ २
नाम्। हा३हायि। पुनानोअविभिःपरिस्रावा। आ
५ २ २ १ २ १ ५ ४
२३४दा। हा३हायि। अदाःसुरभोर ३ ४वा। तापुरो६
५ २ १ ०
हायि॥(२) अदब्धःसुरभिन्तरए। ए। अदब्धःसू३राभि
२ ३ ५ २ २ १ र र ०
न्तारः। सू२३४ते। हा३हायि। चित्त्वाप्सुमदामोअ
२ ३ ५ २ ३ १ र २ १
न्धासा। आ२३४यिणा। हा३हा। तोगोभिरोर ३ ४
५ ४ ५
वा। तापुरो६हायि(३)॥४*॥[१०]

१ २र १र २ १र २ १ र र २
॥सम्मतम्॥ परीतोषिञ्चतासुताम्। सोमोयउत्त
१ २ १ २र १
मꣳहवायिः। दधन्वाꣳ२३याः। नारियोअ। प्सुवा
२ ३र २ ३र २ १ २ १
न्तारा। औहो३४वाहायि। सु। षावार३सो३। हो
२ २ १ २ २ १र २ १र २ १
वा३हा। ममद्रा २ ३ यिभा३४३यिः॥(१) सुषावसोमम
२ १ र २ १ र २
द्रिभायिः। सुषावसोऽममद्रिभायिः। नूनम्पू २ ३ना।

* ऊ० गा० ७प्र० २ख० ४सा०।

१ २ १ २ ३१ २ ३१ २ १
नोअविभिः । परायिस्रवा । औहो३४वाहायि । अ ।

२ १ २ २ १ २
दाब्धा२३:सू३ । होवा३ हा । रभिन्तार३रा३४३: ॥(२)

१ २ १ २ १ २ १ २
अदब्धःसूरभिन्तराः । अदब्धःसूरभिन्तराः । सुतेचार३

२ १ २ १ १ १ २ ३१ २ ३१ २
सिस्वा । आप्सुमदा । मोआन्धासा । औहो३४वाहा

१र २ १ २ २ १
यि । श्री । णान्तो२३गो३ । होवा३हायि । भिरन्ता

२ १
२३रा३४३म् । ओ२३४५ई । डा(३) ॥ ३ * ॥ [११]

५ र २ ४ ५ ४र ५ २र १ २
॥ कालेयम् † ॥ परीतो३षिञ्चतासुताम् । सोमोय

१ २३ ११ २३ र २ १
उ । तमछ्ह्वा२३यिः । दधन्वाछ्या३: । ना२ ३ ४ ।

३ ४र ५ २ २ १ ३ २ २ ५
रियोअप्सुव । ता३रा । सुषावसौ । वा३४३ओ३४वा ।

४ ४
ममा५द्रिभायिः । हो५ई । डा(३) ॥ ४ ‡ ॥ [१२]

२ र र १ ५ १
॥ रौरवम् ॥ परीतोषिञ्चा३तासू२३४ताम् । सोऽ

* ऊ० गा० ६प्र० १ख० ३खा० ।

† "महाकालेयम्"—इति ख०-पाठः ।

‡ ऊ० गा० ६प्र० २ख० ४खा०

मोयउत्तमᳲहविर्द्धन्वाᳲयोनर्यौअप्सु वा२न्तरा। ओ
हा३उवा। सुषावसोममा २ ३ हायि। ओहा३उवा।
द्रिभायिः। औ३होवा॥(१) सुषावसोमा३मद्रा२ ३ ४
यिभायिः। सूषावसोममद्रिभिर्न्नूनम्पुनानोअविभिःपरार
यिस्रवा। ओहा३उवा। अदब्धःसुरभार३यिहायि। ओ
हा३उवा। तरा। औ३होवा॥(२) अदब्धःसुरा३भि
न्तार३४राः। आ। दब्धःसुरभिन्तरःसुतेचित्त्वाप्सुमदा
मोआर२न्धसा। ओहा३उवा। श्रीणन्तोगोभिरु२३त्ता
यि। ओहा३उवा। तराम्। औ२३होवा। हो५ई।
डा(३)॥ ११ *॥ [१३]

॥ आष्टादᳲष्ट्रोत्तरम्॥ परीतोषिञ्चतासुतमैयादौ।
हो३वा। सोमोयउत्तमम्। होवार३यिः। ऐया२३त्।

---

* ऊ० गा० ६प्र० ३ख० ११सा०।

१ २र र १ २ १ र
॥ भ्रुड्वाभ्रुड्वीयम् ॥ प्रसुन्वानायअन्धसा: । मर्त्ता

२ १ २ १ र २ २ १र २ १र
नवष्टतद्वार२३चा: । अपश्वानमराधार२३साम् । हतामा

२ १ ३ २ ५र र ३ १ १ १ १
र२३खा३म् । ना२ । भृगा३४औहोवा । वा२३४५: ॥(१)

१र २र १ २र १ २ १ र २ १र २ १
आजामिरत्केअव्यता । भुजेनपुत्रओणा२३यो: । सर

र र १ १र २ १र २ १
ऊारोनयोषा२३णाम् । वरोना२३यो३ । ना२३यो

१ ३र २ ५र र १ १ १ १ १
३। ना२यिम् । आसा३४औहोवा । दा२३४५म् ॥(२)

१ २र १र २ १र २ १ २ १र २ १
सवीरोदक्षसाधना: । वियस्तम्भरोदा२३सायि । हरि:

२र १ २ र १र २ १ ३र
पवित्रेअव्या२३ता । वेधाना२३यो३ । ना२यिम् । आ

२ ५र र ३ १ १ १ १
सा३४औहोवा । दा२३४५म् (३) ॥ १७* ॥ [१३]

३ ४ र र ३ २ ५ २ ३
॥ वैश्वामित्रम् ॥ प्रसुन्वानायअन्धस: । मर्त्तोना२३४

५ २ १ २ २ १ २ र १ २ १
वा । ष्टा३ताद्वा३चा: । आपश्वाना२३ष्हा३यि । अरा

३ ५ १ २र ३ ५ ४
२धा२ ३ ४साम् । हतामाखौवाओ२ ३ ४वा । नभृपुग

---

* ऊ० गा० १८प्र० १अ० १७सा० ।

३र ४र ३१ ४ ५ २ ३ ५
वाः ॥(१) आजामिरत्के अव्यत । भुजायिना२ ३ ४पू ।
२ १ २ २ २२ र १ २ १ ३
वा३ओणा३यो: । सारञ्जारा१२३हा३ । नयोरषार ३ ४
५ १ २र ३ ५ ४
णाम् । वरो । नायोवाओर३४वा । निमा५सदाम् ॥(२)
३४ र ३र ४ ५ २ ३ ५ २ १२ २
सवीरोदक्षसाधनः । वियास्तार३४स्ता । भा३रोदा३सा
१ २ १ २ १ ३ ५
यि । हारि:पवा२ ३यिहा ३ यि । चे आर्व्यार ३ ४ता ।
१ २र ३ ५ ४ ४
वेधाः । नायौवाओर३४वा । निमा५सदाम् । हो५
ई । डा(३) ॥ १८* ॥ १४

र र र २ १ र
॥ स्वारकौत्सम् ॥ प्रसुन्वानायाऽ३अन्धसाः । मर्त्तोन
२ २ २ र २ १२ २
वष्टता१हा३चाः । अपश्वाना३म् । आ३राधा३साम् ।
१ र ३ ५ ३ २ ४
आऽ२यि । हुतामखोर३४हायि । नभू३गा५वा६५६ ॥(१)
२र र २ १ र २ २ २
आजामिरत्के३अव्यता । भुजेनपुच ओ१णा३यो: । सर
र २ १२ २ १ र ३
ञ्जारो३ । ना३योषा३णाम् । आऽ२यि । वरो नयोर२

* ऊ० गा० १८प्र० २ख० १८सा० ।

५ ३ २ ४ १ २ २ २२
४हायि। निमा३मा५दा६५६ ॥(२) सवीरोदत्ता३साध

१ २ २ २
नाः। वियस्तस्तम्भरो१दा३सायि। हरिः। पवा३यि।

२ १ २ २ १ २२ ३ ५ २
त्रे३आव्या३ता। आ॒ऽ२यि। वेधानयो२३४हायि। नि

२ ३
मा३सा५दा६५६म्(३) ॥ २०* ॥ १५

१ २२ २ १ ११ २ २
॥ उद्वत्यम् ॥ प्रसुन्वानायअन्धसाः। मर्त्तोनवष्ट

१ २ १ २ १२२ २ १ २
तद्वा२३चाः। अपश्वानमराधा२३साम्। हतामखा२

२ १ २ ५२ २ २ ५२
म्। ना॒ऽ२भृ। गा२। या२३४औहोवा। वा२३४औ

२ ३ १ १ १ १ १२ २२ १ २२ १ २ १ २
होवा। वा२३४५ः ॥(१) आजामिरत्केअव्यता। भुजे

२ १२ २ १ २ २ २ १२ २ १ २
नपुत्रओणा२३योः। सरज्जारोनयोषा२३णाम्। वरोन

१ १ २ ५२ २ २
यो२। ना॒ऽ२यिमा। सा२। या२३४औहोवा। दा

१ १ १ १ १ २२१२ २ १२ २ १ २ १२
२३४५म् ॥(२) सवीरोदत्तमाधनाः। वियस्तस्तम्भरो

२ १ २२ १ २ २ १ २
दा२३सायि। हरिःपवित्रेअव्या२३ता। वेधानयो२।

---

* ऊ० म॰० १८प्र० १ख० २०प्रा०।

१ १ २ १२ २ २ १ १
ना5२ यिमा । माराया २ ३ ४ औहोवा । हा २ ३
१ १
४ ५म् (३) ॥ २१* ॥ [१६]

१२ १२ २२ १ २ १ २ १२
॥ कण्वरथन्तरम् ॥ ¹⁹सुन्वानायन्धसः । मर्त्तानवा ।
२ १ २ २ २ २ ३ ५२ २ १२
ष्टा३तादा३वाः । अपश्वानमराधसा२३४औहो । हता
५ २ १ २ २३ २
मा२३४खाम् । नभृ३आउवा२३ । ए३ । गवश्वा ॥ (१)
१२२ १२ २१ २१ २१२ २ १ २ २
आजामिरत्केअव्यता । भुजेनपूत् । वा३ओणा३योः ।
२२ २ ३ ५१ २१२ ५ १
सरश्वारोनयोषणा२३३औहो । वरोना२३४यो । निमा३
२ २३२ २२२१२२ १२१ १
१उवा२३ । ए३ । सदमा ॥(२) सावीरोदक्षसाधनाः ।
२१ २ २२ १ २ २
वियस्तस्ता । भा३रोदा३सायि । हरिःपवित्रेअव्यता
५२ २२ १२ ५ २ २
२३४औहो । वेधाना२३४यो । निमा३१उवा२३ । ए३ ।
२ ३ २
सदमा (३) ॥ ७† ॥ [१७] ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य
प्रथमः खण्डः ॥ १ ॥

* ऊ० गा० १९प्र० २ख० २१सा० ।
† ऊ० गा० २२प्र० २ख० ७सा० ।

अथ द्वितीय-खण्डे —

अभ्रातृव्य इति प्रगाथात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

२ १ २ १ २र ३ २ २ ३ १ २
अभ्रातृव्योअनात्वमनापिरिन्द्रजनुषासनादसि।

१ १ २ ३ १ २
युधेदापित्वमिच्छसे ॥ १* ॥

हे "इन्द्र!" त्वं "जनुषा" जन्मनैव "अभ्रातृव्यः" ["व्यन् सपत्ने (४, १, १४५)"—इति व्यन् प्रत्ययः] सपत्न-रहित इत्यर्थः, "अना" अनेतृकः ["ऋतश्छन्दसि (५, ४, १५८)"-इति कपः प्रतिषेधः] अनियन्तृक इत्यर्थः, "अनापिः" बन्धु-वर्ज्जितश्च, "सनादसि" चिरादेव भ्रातृव्यादि-वर्जितोऽसि, यत्र त्वया "आपित्व" बान्धवम् "इच्छसे" इच्छसि, तत्र "युधेत्" युद्धेनैव युद्धं कुर्व्वन्नेव स्तोतॄणां सखा भवसि ॥ १ ॥

अथ द्वितीया।

१ १ ३ १ २ ३ १ २ ३ १ २ १ २र
नकीरेवन्तᳪसख्यायविन्दसेपीयन्तितेसुराश्वः।

३ २ ३ १ २ ३ १ २र ३ २ ३ १ २
यदाकृणोषिनदनुᳪसमूहस्यादित्पितेवहूयसे ॥ २† ॥ ४

---

* ऋ० आ० ५, १, २, १ (१भा० ८१६ पृ०) = ऋ० वे० ६, २, २, ४।

† ऋ० वे० ६, २, २, ५।

हे इन्द्र! "रेवतं" केवल-धनवन्तं यागादि-रहित मयष्टार मादृश मन्यं मानवं "सख्याय" सखिभावाय "न किः विन्दसे" न लभसे नाश्रयसीत्यर्थः। अयष्टारो जनाः किं सन्तीत्यतआह—"सुराश्वः" [ टु ओ श्वि गति-वृद्ध्योः ; सुरया वृद्धाः तद्वत् ] प्रमत्त-नास्तिकाः। "ते" त्वां "पीयन्ति" [ पीयति हिंसा-कर्मा ] हिंसन्ति तस्मान्नाश्रयतीत्यर्थः। "यद्वा" त्वं "नदनु" [ नद अव्यक्ते शब्दे ( भ्वा० प० )] यं स्तोतारं "कृणोषि" मदीयोऽयमिति यदा भावयसि, तदानीं संवहसि धनादिकं तस्मै वहसि। "आदित्" अनन्तरमेव तेन लब्धधनेन स्तोत्रा "पिता इव" पालयिता जनक इव "हूयसे" स्तुतिभिराहूयसे स्तूयस इत्यर्थः॥ २॥ ४

॥ उत्थामद्धीयवम्॥ अभ्रातृ३व्योअनातुवाम्। अनापा१यिरा२यि। द्रजनुषासना२३दसायि। यूधेदापायि। त्वमा२३यिच्छसाउ। वा३॥(१) युधेदा३पित्वमिच्छसायि। नकायिरा१यिवा२। तऽसखियायवार३यिन्दसायि। पायिय़न्तितायि। सुरा२३श्रुवाउ। वा३॥(२) पीयन्ता३यितेसुराश्रुवाः। यदाकार१र्णो२। षि

२ १ ७ २ २
तदनुꣳसमू२३हमायि। आदित्यितायि। वह्न२३यमा
२र १११
उ। वा३। त्तौषे३४५(३)॥ १०*॥ ४

आत्वासहस्रमिति त्र्यृचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा।

१ २ ३ १ २ ३ २ ३ १ २ २र ३ १ २
आत्वासहस्रमाशतंयुक्तारथेहिरण्यये।
३ १ ३ १ २ २ ३ १ २ २ १ २
ब्रह्मयुजोहरयइन्द्रकेशिनोवहन्तुसोमपीतये॥ १‡॥

हे "इन्द्र!" "त्वा" त्वां "सहस्रं" सहस्र-सङ्ख्याकाः "हरयः" त्वदीया अश्वाः "आ वहन्तु" आनयन्तु अस्मद्यज्ञं, तथा "शतं" शत-सङ्ख्याकाश्च भवदीया अश्वाः त्वामावहन्तु [ यद्यपि द्वावेवास्य हरी तथापि तद्विभूतयोऽन्येऽपि बहवोऽश्वाः सन्ति। ननु युगपदेवैकैरश्वैः कथं वाहयितुं शक्यत इत्यत आह— युक्ता इति ] "हिरण्यये" स्वर्ण-विकारे [ हिरण्य-शब्दाद् विकारार्थे विहितस्य मयटः "ऋत्व्यवास्त्व्य (६, ४, १७५)"— इत्यादौ म-लोपो निपात्यते ] तादृशे "रथे" "युक्ताः" सम्बद्धाः [ बहूनां अश्वानां शीघ्र-गमनाय रथे नियुक्तत्वाद् युगपदेव सर्वैरश्वैर्गन्तुं शक्यत इति भावः ]। कीदृशा हरयः? "ब्रह्म-

* ऊ० गा० ७प्र० १ख० १०गा०

† 'कक्षीवन्तं कौचीवम्'—इति वि०

‡ ऊ० आ० २, २, ८, ३ ( उआ० ५०५३० ) = ऋ० वे० ४, ७, १४, ४।

युजः" ब्रह्मणा परिवृढेनेन्द्रेण युक्ताः [ यद्वा, ब्रह्मणास्मदीयेन स्तोत्रेण अस्माभिर्दत्तेन हविषा वा युक्ताः ] "केशिनः" केशाः सटाः तैर्युक्ताः। किमर्थम् इन्द्रस्य वहनम्? तत्राह—"सोमपीतये" सोमस्य पानाय यथास्मदीयं सोमं पिबेत्, तथा वहन्त्वित्यर्थः॥ १॥

अथ द्वितीया।

२ ३ १ २ ३ २ ३ १ २ ३ १ २
आ त्वा रथे हिरण्यये हरी मयूरशेप्या।

१ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
शितिपृष्ठा वहतां मध्वो अन्धसो विवक्षणस्य पीतये॥ २*॥

[ पूर्वं हर्योर्विभूतिरूपा अश्वाः इन्द्र मावहन्त्विति प्रार्थितम्, अधुना तावेवेन्द्र मावहतामिति प्रार्थ्यते—] "हिरण्यये" हिरण्मये "रथे" युक्तौ "मयूरशेप्या" मयूरवर्णः शेपो ययोस्तौ [ सुपां सुलुगिति (७,१,३९) विभक्तेर्डादेशः ] "शितिपृष्ठा" श्वेतपृष्ठौ† एवम्भूतौ "हरी" अश्वौ हे इन्द्र! "त्वा" त्वाम् "आ वहताम्"। किमर्थम्? "मध्वः" मधुर-रसस्य "विवक्षणस्य" वक्तुमिष्टस्य स्तुत्यस्य‡ यद्वा वोढव्यस्य प्रापव्यस्य "अन्धसः" अन्नस्य सोमरूपस्य "पीतये" पानार्थम्॥ २॥

* ऋ० वे० ५, ७, १४, ५।

† 'शितिपृष्ठा—नीलपृष्ठौ'—इति वि०।

‡ 'अतिशयेन विवर्द्धितभूतस्य'—इति वि०।

अथ तृतीया।

२३ २ १ २ ३१२ १ १ १
पिबात्वा ऽ३ऽस्यगिर्वणःसुतस्यपूर्वपाइव।
१ १ ३ १२३१ २ ३ २ ३१ २
परिष्कृतस्यरसिनइयमासुतिश्चारुर्मदायपत्यते॥ ३* ॥ ५

हे "गिर्वणः" गीर्भिर्वननीयः स्तुतिभिः सम्भजनीयेन्द्र! "सुतस्य" अभिषुतस्यास्य सोमस्य [क्रियाग्रहणं कर्त्तव्य मिति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी (२,३,६२)] इम मभिषुतं सोमं "नु" क्षिप्रं "पिब"। तत्र दृष्टान्तः—"पूर्वपाइव"† [पूर्वः पूर्वेभ्यो देवेभ्यः प्रथमभावी सन् पिबतीति पूर्वपा वायुः, सह्यै-न्द्रवायवे मुख्ये ग्रहे सर्वेभ्यः देवेभ्यः पूर्वं पिबति "यस्य देव दधिषे पूर्वपेयम्"—इति निगमान्तरम्; तादृशः] वायुरिव त्वमपि सर्वेभ्यो देवेभ्यः पूर्वं पिबेत्यर्थः। कीदृशस्य सोमस्य? "परिष्कृतस्य" अभिषवादिभिः संस्कृतस्य ["सम्पर्युपेभ्यः (६,१, १३८)"—इति करोतेर्भूषणे सुट्, "परिनिविभ्यः (८,३,७०)" —इति सुटः षत्वम्], "रसिनः" रसवतः। अपिच "इयमा-सुतिः"‡ अयमासवो मदकरः "चारुः" शोभनः सोमरसः "मदाय" हर्षाय हर्ष-जननाय "पत्यते" सम्पद्यते [पत्लृ गतौ (भ्वा० प०), यद्वा पत्यतिरैश्वर्य्य-कर्मा। मदाय—मदस्य पत्यते ईष्टे मदोत्पादने शक्त इत्यर्थः]॥ ३॥ ५

---

* ऋ० वे० ५, ७, १५, १।

† 'पूर्वपातारो ये ते यथा पिबन्ति तद्वत् पिबन्त'—इति वि०।

‡ 'चासुतिश्चरपतिरित्यर्थः'—इति वि०।

५र ४ १ ४ ५र ४ ५ १ र
॥ अभीवर्त्तम् ॥ आत्वा३सा२ह्स्वमाश्रतोवा । यूक्ता

२र १ २ १ २ ३ ४
रथे । हिराण्या१या२यि । ब्राह्मयुजौ३१२३४ । हरय

५ २ १ २ १ २ ३ १
इ । न्द्रकायिश्रा१यिना२ः । वहान्ट्व१सो२ । मपा३यि ।

१ १ १ १ १ ५र ४ २ ४ ५ ४ ५ १ र
ता२३४५यि ॥(१) आत्वा३रा३थायिहिरण्ययोवा । हारी

२र १ १ २ ३ ४र
मयू । रश्रायिपा१या२ । यितिपृष्ठा३१२३४ । वहता

५ २र १ १ १ १ ३ १ १
मभ्वोआन्धा१सा२ः । विवाक्षा१णा२ । स्यपा३यि । ता

२ १ १ १ १ ५ ४ ३ ४ ५ ४ ५
२३४५ । या२३४५यि ॥(२) पिबा३तू३वस्यगिर्वणोवा ।

१ २र १ १ २ ३
सुतस्यपू । र्वपाआ१यिवा२ । पारिष्क्ता३१२३४ । स्य

४ ५ २ १ १ र १ १ २ १
रसिनइ । यमाद्ध१ता२यिः । चारुम्मा१दा२ । यपा३ ।

१ २ १ १ १ १
त्या२३४५ । ता२३४५यि(३) ॥ १५* ॥ १

२र र १ २
॥ भारद्वाजम् ॥ आत्वासहा । स्वमाश्रा १ ता२म् ।

१ र १ र र १ २ १ २ १
यूक्तारथेहिरण्यये । ब्रह्मायू१जा२ः । हारयइ । द्रका

---

* ऊ० गा० ७प्र० १ख० १५सा० ।

यिष्मा१यिना२ः । वद्दान्त्१मो२३ । मा२पा२३४औहो

वा । ता२३४य ॥(१) आत्वारथायि । हिराण्या१या२

यि । हारीमयूरशेष्या । शितायिपा१ष्ठा२ । वाहतां

म्म । ध्वोआन्धा१सा२ः । विवाक्षा१णा२३ । स्वा२पा२

३४औहोवा । ता२३४ये ॥(२) पिबातुवा । स्यगायिर्वा

१णा२ः । सुतस्यपूर्वपाइव । परायिष्का१र्ता२ । स्वार

सिनइ । यमाक्ष१ता२यिः । चारुम्मा१दा२३ । या२पा

२३४औहोवा । त्यो२३४ते(३) ॥ १२* ॥ २

॥ अभिनिधनं काण्वम् ॥ औहौहोहायि । आयाही ।

आत्वा। सा२३४हा। स्वामाग्रा२३४ताम्। यूष्मारा२३४थायि।

हीरण्ययायि । ऐहोयि । आ२३४यिही । श्राऽह्मायू२३

४जो । हारायार२३४ई । द्राक्षेग्निनाः । ऐहोयि । आ

---

* ऊ० गा० १८प्र० २ख० १२सा० ।

२३४यिही। वा इन्द्र२३४सो। मपा३यिता५या६५६यि ॥(१)

औहोहोहायि। आयिही। आत्वा। रा२३४थायि।

हायिरण्या२३४यायि। हारीमा२३४यू। राशेपिया।

ऐहोयि। आ२३४यिही। शायितायिपा२३४र्त्री। वा

हाता२३४म्मा। ध्वोअन्धसाः। ऐहोयि। आ२३४यि

ही। वायिवत्ता२३४णा। स्यपा३यिता५या६५६यि ॥(२)

औहोहोहायि। आयिही। पायिबा। तूर ३ ४वा।

स्यागिर्वा२३४णाः। सूतस्या२३४पू। वीपाइवा। ऐहो

यि। आ२३४यिही। पारिष्का२३४र्त्ता। स्यारासी२३

५नाः। इयमासुतायि। ऐहोयि। आ२३४यिही। चा

रुम्मा२ ३ ४दा। यपा३त्या५ता ६ ५ ६ यि। आ २ ३ ४

भी(३) ॥ ३ * ॥ [३] ५

---

* ऊ० गा० २३प्र० ३ख० ३सा०।

अथ आसीतेति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ २ ३ १र २र ३ १ २ ३ १ २
आसोतापरिषिञ्चताश्वन्नस्तोममप्तुरꣳरजस्तुरम्।
२ १ २ ३ १ २
वनप्रक्षमुदप्रुतम् ॥ १ * ॥

हे ऋत्विज! "आसोत" सोमम् अभिषुणुत [ षुञ् अभिषवे (स्वा० उ०), लोटि छान्दसो (२, ४, ७२) विकरणस्य लुक्, "तप्तनप्तनथनाश्च (७,१,४५)"—इति तस्य तबादेशः]। किञ्च, "परिषिञ्चत" परितस्तं वसतीवर्यादिभिः सिञ्चत। कीदृशम्? "अश्वं न" अश्वमिव वेगिनं "स्तोमं" स्तोतव्यम्, "अप्तुरम्" अन्तरिक्षस्थितानामुदकानां प्रेरकम् "रजस्तुरं" तेजसां प्रेरकम्, "वनप्रक्षम्" उदकवत् चरणशीलम्, "उदप्रुतम्" उदके गच्छन्तं प्लवमानं सोममभिषुणुत अभिषिञ्चत च ॥

"वनप्रक्षं"-"वनक्रक्षम्"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
सहस्रधारंवृषभम्पयोदुहम्प्रियन्देवायजन्मने।
१ २ ३ २ ३ १ २ ३१र २र ३ २ ३ २ ३ २
ऋतेनयऋतजातोविवावृधेराजादेवऋतम्बृहत् ॥२†॥ ६

---

* छ० आ० ६, २, ४, ३ ( २आ० २२८४० ) = ऋ० वे० ७, ५, ३८, १।

† ऋ० वे० ७, ५, ३८, २।

"सहस्रधारं" बहुधारोपेतं, "वृषभं" कामानां वर्षकं, "पयोदुहं" क्षीरवत् सारभूतं रसं सिञ्चन्तं "प्रियं" प्रीणयितारं सोमं "देवाय" देव-सम्बन्धिने "जन्मने"* देवेभ्यस्तदर्थम् अभिषुणुत। "ऋतजातः" उदकाज्जातः "यः" "राजा" सोमः "ऋतेन" वसतीवर्याख्येनोदकेन "वि वावृधे" विशेषेण वर्द्धते। कीदृशः? "देवः" द्योतमानः स्तोतव्यो वा, "ऋतं" सत्यभूतः, "बृहत्" महान्। तमासुनुतेति पूर्व्वेण समन्वयः॥

"पयोदुहम्"-"पयोवृधम्"—इति पाठौ॥ २ ॥ ६

॥ वाचःसाम ॥ आसोतापा। द्दोरिषिञ्चता ६ ए। आश्वन्नस्तो। मामघृरा २म्। राजस्तुरम्। वानप्रा चा२३म्। ऊ२३दा३। प्रू२३४५तोई५ हाइ(१) ॥१०॥ [१]

॥ वाचःसाम ॥ आसोतापा। द्दो। रिषिञ्चताई ए। आश्वान्नस्तो। मामघुरा २म्। राजस्तुरम्। वानप्रा सा२३म्। ऊ२३दा३। प्रू३४५तो६ हायि॥(१) वनप्र क्षाम्। द्दोयि। उदप्रुता६मे। माघस्रधा। राम्वृ

* 'जन्मवतां मूलभूताय'—इति वि०।

† ऊ० गा० ४प्र० २ख० १सा०।

१२ २ १ ७ १ ४
षभा२ । पायोदुह्वम् । प्रायन्दायिवा२३ । या२३जा३ ।

२ ५ ३ ४ ५२ २ ३ ४ ५ ५
न्मा३४५नो६हायि ॥(२) प्रियन्देवा । हो । यजन्मना६ए ।

१२ २ १ ७ १ २२२ १२ २
आर्त्तनयः । आर्त्तजाता२ । वायिवावृधे । राजादा

१ ४ २
१ यिवा २ ३ः । आ २ ३ त्ता ३ म् । वृ३ ४ ५ हो ६

५
हायि(३) ॥ १७ * ॥ [२]

२२ १२ २ ४ ५ २ ३ ५ २
॥ सप्तम् ॥ आसोता३परि । षिञ्चा२३४ता । अ

१ २ १ १ २ ४ २ ५
श्वन्नस्तोमा२म् । अप्तु रा२रा३जा३ । स्तुर२ ३ ४राम् ।

१ २ ४ २ ५ २ १ १
वना । प्रत्तामू२दा३ । प्र ३४५नो६हायि ॥(१) अनप्रा३

४ ५ २ ३ ५ २ १ २ १ १ २
त्तसु । दप्र२३ताम् । सहस्रधारा२म् । वृषभाया३

४ २ ५ २ १ २ २ ४ २
यो३ । दू३२३४हाम् । प्रियाम् । देवाया३जा३ । न्मा

५ १ १ २ ४२ ५ २ ३ ५
३४५नो६हायि ॥(२) प्रियन्दे३वाय । जन्मा२३४नायि ।

२ १२ १ १ १ २ ४ २ ५
ऋतेनयाआ२ । तजातो३वा३यि । वा३ २ ३ ४द्धायि ।

---

* ऊ० गा० ७प्र० १अ० १७सा०

२ १२ १ १  १र २ ४ २ ५
ऋतेनयाआ२ । तजातोवा३यिवा३ । वा३२३४ह्वायि ।
२ १र२ १  १ १ ४ २ ५
ऋतेनयाआ२ । तजातो३वा३ । यि । वा३२३४ह्वायि ।
२ र १  र २ ४ २ ५
राजा । देवाआ ३ त्ता ३ म् । बृ३ ४ ५ हो ६हायि(३)

॥ १३* ॥ [३] ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य
द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीय-खण्डे—

अग्निर्वृत्राणीति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

३ २३ १ २  ३ १ २ ३ १ २
अग्निर्वृत्राणिजङ्घनद्द्रविणस्युर्विपन्यया ।
१ २ ३ १र २र
समिद्धःशुक्र आहुतः ॥ १† ॥

"विपन्यया" सुस्तूयमानः "द्रविणस्युः" द्रविणं धनं स्तोतृभ्यामिच्छन् [ यद्वा, हविर्लक्षणं धनमात्मन इच्छन् "अग्निः"

---

* ऊ० गा० १२प्र० १ख० १३सा० ।

† छ० आ० १, १, १, ४ ( १भा० ८८पृ० । = ऋ० सं० ४, ५, २७, ३ ।

"वृत्राणि" आवरकाणि रक्षः-प्रभृतीनि तमांसि वा "जङ्घनत्" हिंसन्तु। कीदृशोऽग्निः? "समिद्धः" सम्यक् दीप्तः अतएव "शुक्रः" शुक्लवर्णः "आहुतः" हविर्भिरभिहुतः॥ १॥

अथ द्वितीया।

१ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
गर्भेमातुःपितुष्पिताविदिद्युतानोअक्षरे*।
१ २ ३ २ ३ २ ३ २
सीदन्नृतस्ययोनिमा॥ २†॥

[ अत्र मातृ-पितृ-शब्दाभ्यां भूर्द्यौश्चाभिधीयेते "द्यौः पिता, पृथिवी मातेति श्रुतेः ] "मातुः" भूम्याः "गर्भे" गर्भस्थाने मध्ये "अक्षरे" क्षरण-रहिते वेद्याख्ये स्थाने‡ "वि दिद्युतानः" विशेषेण दीप्यमानः "पितुः पिता" द्युलोकस्य पालयिता हविषां प्रदानेन, एवम्भूतोऽग्निः "ऋतस्य" यज्ञस्य "योनिम्" उत्तरवेद्याख्यं "धिषणां" [सप्तम्यर्थे द्वितीया (३, १, ८५)] "आसीदन्" उत्तरवेद्यामुपविशन् अग्निर्वृत्राणि जङ्घनदित्यन्वयः॥ २॥

अथ तृतीया।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
ब्रह्मप्रजावदाभरजातवेदोविचर्षणे।
२ ३ २ ३ १ २ ३ २
अग्नेयद्दीदयद्दिवि॥ ३¶॥ ७

* "अक्षरन्"—इति क० पु० पाठः।

† ऋ० वे० ४, ५, २७, ४।

‡ 'अक्षरे—अक्षीयमाणे स्थाने'—इति वि०।

¶ ऋ० वे० ४, ५, २७, ५।

हे "जातवेदः" जातानां वेदितः! "विचर्षणे" विशेषेण द्रष्टः अग्ने! "प्रजावत्" पुत्र-पौत्र-सहितं "ब्रह्म" अन्नम् "आ भर" आहर "यद्" ब्रह्म "दिवि" द्युलोके "दीदयत्" दीप्यते। देवेषु यत् प्रशस्तमन्नं राजते तदाहरेत्यर्थः ॥ ३ ॥ ७

अस्यप्रेषेति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

३ २ ३ २ ३ १ २ ३ १ २
अस्यप्रेषाहेमनापूयमानो
३ २ ३ २ ३ १ २ ३ १ २
देवोदेवेभिःसमपृक्तरसम्।
३ २ ३ २ ३ १ २ ३ १ २
सुतःपवित्रम्पर्येतिरेभन्
३ २३ १ २ ३ २ ३ १ २
मितेवसद्मपशुमन्तिहोता ॥ १* ॥

"अस्य" सोमस्य "प्रेषा" [ प्रेषतिर्गत्यर्थः क्विपि रूपं, "सावेकाच (६,१,१६८)"—इति विभक्तेरुदात्तत्वम्; ] प्रेरणेन, "हेमना" हिरण्येन "पूयमानः" ["हिरण्यपाणिरभिषुणोति"—इति हिरण्य-सम्बन्धः, तादृशः] "देवः" दीप्यमानः सोमः "रसम्" आत्मीयं "देवेभिः" देवैः सह "समपृक्त" सम्पर्चयति संयोजयति [पृची सम्पर्के (अदा०आ०)] ततः "सुतः" अभिषुतः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन निर्मितं "पर्येति"

* छ० आ० ६, १, ४, ४ (२भा० ११५१०) = ऋ० वे० ७, ४, ११, १।

परिगच्छति। कमिव? "होता" देवानामाह्वाता ऋत्विक् "मिता इव" निर्मितान् "पशुमन्ति" बहुपशून् "सद्म" सदनानि यज्ञगृहान यथा पर्य्येति तद्वत् ॥ १ ॥

अथ द्वितीया।

३ १ २र ३ २ १ २
भद्रावस्त्रासमन्या३वसानो

३ ३ २ ३ १ २ ३ १ २
महान्कविर्न्निवचनानिशंसन्।

१ २ ३क २र ३ १ २
आवच्यस्वचम्वोःपूयमानो

३ १ २र ३ १ २
विचक्षणोजागृविर्द्देववीतौ ॥ २* ॥

"भद्रा" भद्राणि कल्याणानि "समन्या" [समनमिति सङ्ग्राम-नाम (२, १७, १६), तत्र साधुरिति यत्] सङ्ग्रामयोग्यानि "वस्त्रा" वस्त्राणि आच्छादकानि तेजांसि "वसानः" आच्छादयन् "महान्" "कविः" क्रान्तदर्शी सन् पूजनीय "निवचनानि" नितरां वक्तव्यानि स्तोत्राणि† "शंसन्" "विचक्षणः" विशेषेण सर्वस्य द्रष्टा "जागृविः" जागरणशीलः। हे सोम! एवम्भूतस्त्वं "देववीतौ" देवानां वीतिर्भक्षणं यस्मिन् तद्देववीतिर्यज्ञः तस्मिन् "चम्वोः" अधिषवण-फलकयोः‡ "आ वच्यस्व" पात्राण्याविश [वचिर्गत्यर्थः (भ्वा० प०) व्यत्ययेन श्यन्] ॥ २ ॥

* ऋ० वे० ७, ४, ११, २।

† 'वचनानि—ऋग्यजुः-साम-लक्षणानि'—इति वि०।

‡ 'चम्वोः—अधिषवण-चर्मणोरुपरि'—इति वि०।

अथ तृतीया ।

१ २ ३ १ २ ३ २ ३ १ २
समुप्रियोम्टज्यतेसानोअव्ये

३ १ २ ७ २ ३ १ २ ३ २
यशस्तरोयशसाङ्क्षैतोअस्मे ।

२ १ २ ३ १ २ ३ १ २ ३
अभिस्वरधन्वापूयमानो

३ १ २ ३ २ ३ १ २
यूयम्पातस्वस्तिभिःसदानः ॥ ३ * ॥ ८

"यशसां" यशस्विनां मध्ये "यशस्तरः" अतिशयेन यशस्वी "क्षैतः" क्षितो भावः"प्रियः"प्रीणयिता सोमः "सानौ" समुच्छ्रिते "अव्ये" अवि-भवे पवित्रे "अस्मे"अस्मदर्थं "सम्मृज्यते"ऋत्विग्भिः परिपूयते "उ" [—अवधारणे] "पूयमानः" त्वं "धन्वा" अन्तरिक्षे "अभि स्वर"अभितः शब्दय"यूयम्"[प्रजायां बहुवचनम्†] हे सोम ! त्वं "नः" अस्मान् "स्वस्तिभिः" कल्याणतमैः पालनैः "सदा" सर्वदा "पात" रक्षत पालयेत्यर्थः ॥ ३ ॥ ८

३ १ ३ २ ३२
॥ उद्वंशीयवासिष्ठम् ॥ उद्वयि । अस्या३ ४औ

४२ ५ १२ १ १२ २ ३ ४ ५ ३२ २ ३२
होवा । प्रेषा । हे३मना । पूयमानाः । देवा३४औ

४२ ५ १२ २ १ २ ३ ४ ५ ३ २
होवा । देवायि । भो३:सम । पुष्करसाम् । सुता३

* ऋ० वे० ७, ४, ११, ३ ।

† 'यूयं पात—बहुवचनमिदं सह देवैरित्यर्थः'—इति वि० ।

२र २ १ २ १ २ ३ ४ ५ ३ २
४औहोवा । पवायि । चा३परि । एतिरेभान् । मिता

३र २ ५ १ २ १ २ २ ४
३४औहोवा । वसा । ह्वा३पशु । मा३४३ । तो२हो

३ २ ३र २४ ५ १ २ १
पूता६५६ ॥(१) भद्रा३४औहोवा । वस्ता । समनि ।

२ ३ ४ ५ ३ २ ३र ४र ५ १ २ १
यावसाना: । मद्दा३४औहोवा । कवायि: । निवच ।

२ ३ ४ ५ ३र २ ३र ४र १ २ १ र
नानिग्राऽसान् । आवा३४औहोवा । च्यसा । चमुवो: ।

२ ३ ४ ५ ३ २ ३र ४र ५ १ २र १
पूयमाना: । विचा३४औहोवा । त्तणो । जागृवि: ।

२ २ ४ ३ २ ३र ४र ५
दा३४३यि । वा२चापुयिता६५६७ ॥(२) समू३४औहोवा ।

१ २ १ र २ ३र ४ ५ ३ २ ३र ४र ५
प्रियो । मृज्यते । सानोअव्यायि । यशा३४औहोवा ।

१ १ १ र २ ३र ४ ५ ३ २ ३र ४र ५
तरो । यशसाम् । चैतोअस्मायि । अभा३४औहोवा ।

१ २ १ र २ ३ ४ ५ ३ २ ३र २ ४ ३र
स्वरा । धनुवा । पूयमाना: । उक्षवायि । यूया३औ

४र ५ १र २ १ २ २ ४
होवा । पाता । सुवस्ति । भा३४३यि: । सा३दापू

ना६५६(३) ॥ ६ * ॥ [१] ८

* ऊ० गा० ७प्र० २अ० ६सा०

अथैतोन्विन्द्रमिति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २

एतोन्विन्द्रꣳस्तवाम शुद्धꣳशुद्धेन साम्ना ।

३ २ ३ १ २ ३ १ २ ३ २ ३ १ २

शुद्धैरुक्थैर्वावृध्वाꣳसꣳशुद्धैराशीर्वान्ममत्तु ॥ १ * ॥

[ अत्रेतिहासमाचक्षते—पुरा किलेन्द्रो वृत्रादिकान् असुरान् हित्वा ब्रह्महत्यादि-दोषेणात्मान मपरिशुद्ध मित्यमन्यत अथ तद्दोष-परिहारार्थं यदेन्द्र ऋषीनवोचत्—यूय मपूतं मां युष्मदीयेन साम्ना शुद्धं कुरुतेति । ततस्ते च शुद्धत्वाद्केन साम्ना शस्त्रैश्च परिशुद्ध मकार्षुः । पश्चात् पूतायेन्द्राय यागादि-कर्मणि सोमादीनि हवींषि च प्रादुरिति । एषोऽर्थः गाटगायनक-ब्राह्मणे प्रतिपादितः—"इन्द्रो वा असुरान् हत्वाऽपूत इवामेध्यो अमन्यत सोऽकामयत शुद्धमिवआसन्नं शुद्धेन साम्ना स्तुयुरिति स ऋषीनब्रवीत् स्तुतमिति ततएव ऋषयः सामापश्यन् तेनास्तुवन्नेतोन्विन्द्रमिति ततो वा इन्द्रः '...' शुद्धो मेध्यो भवदिति । तथाच अस्या ऋचोऽयमर्थः—] ऋषयः परस्परं ब्रुवन्ति—"नु" क्षिप्रम् "एत उ" आगच्छतैव । आगत्य च "शुद्धेन" शुद्धत्वाद्केन साम्ना, तथा "शुद्धैः" शुद्धि-हेतुभिः "उक्थैः" शस्त्रैश्च इन्द्रम् शुद्धमपापिनं कृत्वा "स्तवाम" स्तुयाम । ततः "साम्ना" शस्त्रैश्च "वावृध्वांसं" पाप-राहित्येन वर्द्धमानं तमिममिन्द्रं "शुद्धैः"

* ऋ० श्रा० ४, २, १, ९ (१भा० ७१४पृ० ) = ऋ० वे० ६, ६, ११, २ ।

शुद्धत्वादकैर्गव्यादिभिः "आशीर्वान्" आश्रयणवान् [ "छन्द-सीरः (८, २, १५)"—इति मतुपो वत्वम्, तादृशः सोमः ] "ममत्तु" तमिन्द्रं मादयतु [ मद्यतेश्छान्दसः (२,४,७६)श्लुः ] ॥

"शुद्धैराशीर्वान्"-"शुद्धआशीर्वान्"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१ २ ३२ ३१ २ ३१ ३१ २ ३१ २
इन्द्रशुद्धोनआगहिशुद्धःशुद्धाभिरूतिभिः।
३ २ ३१२ १२ ३१ २
शुद्धोरयिन्निधारयशुद्धोममद्धिसोम्य ॥ २* ॥

हे "इन्द्र!" "शुद्धः" अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं "नः" अस्मान् "आ गहि" आगच्छ "शुद्धाभिः" "ऊतिभिः" ऊतयो मरुतः [ अवन्ति सर्वत्र गच्छतीति वा ] तेऽपि सामभिः शस्त्रैश्च परिपूताः तैः मरुद्भिः सह "शुद्धः" पाप-रहितः त्वम् आगहि। आगत्य च "शुद्धः" त्वं "रयिं" धनं अस्मासु "निधारय" अतितरां स्थापय। किञ्च, हे "सोम्य" सोमार्हं! "शुद्धः" त्वं "ममद्धि" सोमेन माद्य [ मदी हर्षे (दि० प०) लोटि "बहुलञ्छन्दसि (२, ४, ७६)"—इति शपः श्लुः ] ॥

"ममद्धिसोम्य"-"ममद्धिसोम्यः"—इति पाठौ ॥ २ ॥

---

* ऋ० सं० ६, ६, ३१, ३।

अथ तृतीया ।

१ २ ३ १र २र ३ २ ३ १र २र ३ १ २
इन्द्र शुद्धो हि नो रयिꣳ शुद्धो रत्नानि दाशुषे ।
३ १ ३ १ २ ३ १र २र
शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजꣳ सिषाससि ॥ ३ * ॥ ९

हे "इन्द्र !" "शुद्धः हि:" [—अवधारणे †] शुद्ध एव त्वं "नः" अस्मभ्यम् "रयिं" धनं प्रयच्छ । तथा "शुद्धः" त्वं "दाशुषे" हविर्दत्तवते यजमानाय "रत्नानि" रमणीयानि कनक-गवादीनि देहि । ततः "शुद्धः" पाप-रहितः त्वं "वृत्राणि" अपामावरकान् कर्म-विघ्नकारिणः शत्रून् पापानि वा "जिघ्नसे" हंसि । ततः "शुद्धः" शत्रु-हनन-दोष- परिहाराय अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं वाजमन्नमस्मभ्यं "सिषाससि" प्रदातुमिच्छसि ‡ [यदा शत्रूनहं हन्यां तदा शुद्धत्पादकैः सामभिः शस्त्रैश्च यूयं मां परिशुद्धं कुरुतेत्येवमस्मभ्यं धनमन्नञ्च दातुमिच्छसीत्यर्थः] ॥ ३ ॥ ९

२र र १
॥ शुद्धाशुद्धीयोत्तरम् ॥ एतोन्विन्द्रꣳ स्तवाऽमा । शु
२ १ १ १ २ १र
द्धꣳ शुद्धे । न । साम्ना २ । शुद्धायिरुक्था३यिः । वा
३ ५ २ १र २ १ १ १
वा२द्धा२३४ꣳ साम् । शुद्धैरा२३शी । र्वान्ममत्तु । इडा

---

* ऋ० वे० ६, ६, ३१, ४ ।

† 'हि तस्मादर्थे, शुद्धस्त्वं यस्मात् रयिं धनं शुद्धं निधारय'—इति वि० ।

‡ 'सिषाससि—साधयसि'—इति वि० ।

२　　र　र　　१　　　१　　१　　　र
२३ ॥(१) इन्द्रशुद्धोनआगा२हो । शुद्धःशुद्धा । भिद्ध ।
१　　　　　१　२　२　　　　१　२　५
तायिभा२यिः । शुद्धोरा३योर्म । निधा२रा२३४या ।
२ १र　　२　　१ र　२　　१　　　　१　र
शुद्धोमा२३मा । धोसोमिय । इडा२३ ॥(२) इन्द्रशुद्धो
र　२　　　　१र　२　र　　१　　　　१
हिनोरा३योम् । शुद्धोरत्नानिदा । शूषा२यि । शुद्धो
२　१　　१　३　　५　　२ १र　　　१
वा३त्नी३ । णिजा२न्वा२३४सायि । शुद्धोवा २ ३ जाम् ।
१　र　२　　१　　　२　　　　१
सायिषासखि । इडा २ ३ भा ३ ४ ३ । ओं २ ३ ४ ५ई ।
डा(३) ॥ १२ * ॥ [१] ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

तृतीयः खण्डः ॥ २ ॥

---

अथ चतुर्थ-खण्डे—

अग्नेस्तोममिति तृचात्मकं सूक्तम्,

तत्र प्रथमा ।

३ १र　२र　　　३ २ १ १ २ ३ १ २
अग्नेस्तोममनामहे सिध्रमद्य दिविस्पृशः ।
३ १ २　　३ १ २
देवस्य द्रविणस्यवः ॥ १ † ॥

---

* ऊ० गा० ७प्र० २अ० १२सा० ।

† ऋ० वे० ४, १, ५, २ ।

"द्रविणस्यवः" द्रविणं धनमिच्छन्तो वयं "दिविस्पृशः" सूर्यरूपेण आकाशं व्याप्नुवतो "देवस्य" द्योतमानस्य "अग्नेः" "सिद्ध" पुरुषार्थानां साधकं "स्तोमं" स्तोत्रम् "अद्य" अस्मिन्नहनि "मनामहे" ब्रूमः ॥ १ ॥

अथ द्वितीया।

२ १ २ ३ २ ३ २ ३ १र २र ३ २
अग्निर्जुषतनोगिरोहोतायोमानुषेष्वा।

१ २ ३ २ ३ १ २
सयक्षद्दैव्यञ्जनम् ॥ २ * ॥

"होता" देवानामाह्वाता होम-निष्पादको वा "अग्निः" "मानुषेषु" "आ" वसति। "यः" अग्निः "नः" अस्माकं "गिरः" स्तुतीः "जुषतां" सेवताम् "सः" अग्निः "दैव्यं जनं" देव-सम्बन्धिनं जनं† "यक्षत्" यजतु ॥ २ ॥

अथ तृतीया।

१ २ ३ १ १ ३ २ ३ २ ३ १ २
त्वमग्नेसप्रथाअसिजुष्टोहोतावरेण्यः।

१ २ ३ १र २र
त्वयायज्ञंवितन्वते ॥ ३ ‡ ॥ १०

* ऋ० वे० ४, १, ५, ३।

† 'दैव्यं जनं—देवानां स्वभूतं वसु-रुद्र-मरुत्-प्रभृतिकं जनम्'—इति वि०।

‡ ऋ० वे० ४, १, ५, ४।

हे "अग्ने !" "जुष्टः" सर्वदा प्रीतः "वरेण्यः" सर्वैर्वरणीयः "होता" त्वं "सप्रथाः असि" सर्वतः पृथुर्भवसि [ तथाहि यास्कः— "सप्रथाः सर्वतः पृथुः (निरु० नै० ६.७)"—इति ]। किञ्च, सर्वे यजमानाः "त्वया" साधनेन "यज्ञं" "वि तन्वते"* ॥ ३ ॥ १०

अभित्रिपृष्ठमिति तृचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा ।

२ १ २ ३ १र ३ १
अभित्रिपृष्ठंवृषणंवयोधा

३ २ १ २ ३ १ २
मङ्गोषिणमवावशन्तवाणी ।

२ ३ १ २ ३ १ २ ३ १उ ३
वनावसानोवरुणोनसिन्धु-

१ २ ३ १ २ ३ १ २
र्विरत्नधादयतेवार्याणि ॥ १ ‡ ॥

"त्रिपृष्ठं" त्रीणि पृष्ठानि स्तोत्राणि सवनानि वा यस्य स तथोक्तस्तं "वृषणं" वर्षकं "वयोधाम्" अन्नस्य दातारम् "अङ्गोषिणम्" अपोषवन्तं सोममभिलक्ष्य "वाणीः" स्तोतॄणां वाचः "अवावशन्त" शब्दायन्ते । "वना" वनानि उदकानि "वसानः" आच्छादयन् "वरुणो न" वरुणो यथा सिन्धूनाच्छादयति तद्वत् ।

---

* 'ऋत्विजः विस्तारयन्ति'—इति वि० ।

† 'पञ्चमस्याङ्कः सम्पत्या मध्यन्दिनम्'—इति वि० ।

‡ ऊ० आ०६, १, ४, ६ ( २भा० १२० पृ० )=ऋ० वे० ७, ३, २६, २ ।

"सिन्धुः" स्यन्दनशीलः, "रत्नधाः" रत्नानां दाता सोमः "वाजीणि" धनानि "दयते" प्रयच्छति स्तोतृभ्यः ॥

"अङ्गोषिणम्"-"अङ्गूषाणाम्"—इति पाठौ, "सिन्धुः"-"सिन्धून्"—इति च ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २ ३
शूरग्रामःसर्ववीरःसहावान्

१ २ ३ १ २ ३ १ २
जेतापवस्वसनिताधनानि ।

३ १ २ ३ १ ३ ३ १र
तिग्मायुधःक्षिप्रधन्वासमत्सु

२र ३ १र ३र ३ १ २
अषाढःसाह्वान्पृतनासुशत्रून् ॥ २* ॥

हे सोम ! त्वं "पवस्व" । कीदृशस्त्वम् ? "शूरग्रामः" शूराणां ग्रामः सङ्घो यस्य सः, "सर्ववीरः" सर्वे वीरा यस्य स तथोक्तः, "सहावान्" सहनवान् "जेता" जयशील: "सनिता" सम्भक्ता "धनानि" धनानां, "तिग्मायुधः" तीक्ष्ण-प्रहरण-साधनः,† "क्षिप्रधन्वा" क्षिप्र-सहनशील धन्वा, "समत्सु" सङ्ग्रामेषु "अषाढः" असोढ़ा, "साह्वान्" अभिभवन् । कुत्र ? "पृतनासु" शत्रु सेनासु । कान् ? "शत्रून्" ॥ २ ॥

---

* ऋ० वे० ७, ३, २६, ३ ।

† 'तीक्ष्णायुधः—असि-परशु पाश-प्रभृतिभिरायुधैः सम्पन्नः'—इति वि० ।

अथ तृतीया।

३ १ २ ३ १ २ २ १
उरुगव्यूतिरभयानिकृण्वन्

२ ३ १२ २२ ३ १२
त्समीचीनेआपवस्वापुरन्धी।

३ १२ २२ ३ २३ १२ १२
अपःसिषासन्नुषसःस्वा*ऽ३ऽर्गाः

२२ ३ २ ३ १ ३ १ १
सञ्चिक्रदोमहोअस्मभ्यंवाजान्॥ ३† ॥ ११

हे सोम ! "उरुगव्यूतिः" विस्तीर्ण-मार्गः त्वम् "उभयानि" स्तोतृभ्यः "कृण्वन्" कुर्वन्, "पुरन्धी"‡ इमे द्यावापृथिव्यौ "समीचीने" सङ्गते कुर्वन्, "आ पवस्व" आक्षर। "अपः" "उषसः" "स्वः" आदित्यं "गाः" रश्मींश्च "सिषासन्" सम्भक्तुमिच्छन् "सं चिक्रदः"¶ सङ्क्रन्दसे। "महः" महतः महान्ति "वाजानि" अन्नानि अस्मभ्यं दातुमिति शेषः॥ ३ ॥ ११

२ १ ५ २ ३२ २
॥ सम्पावैयश्वम् ॥ ओ२हायि। ओ३हा। ओहा।

१ ५ २ २ २ २ १ २ ३
इया२। ओ३हा३ए। अभिन्त्रिपा। छा३वृष। णम्व

* "स्व"—इति क० पाठः।

† ऋ० वे० ७, ३, २६, ४।

‡ 'पुरं धारयितः'—इति वि०।

¶ 'चिक्रदः—शब्दं कुर्वन्— इति वि०।

४ ५ १ १र २ १र २ ३ ४ ५ २
योधाम् । अङ्गोषिणाम् । अवाव । शन्तवाणीः । व

१र २ १ १ २ ४ ५ २ २ १
नावसा । नो३वरू । णोनसिधूः । विरप्शधाः । इय

र २ २ ४ २र १ र
ते । वा३४३ । रीयाऽ५णाइ५६यि ॥(१) शूरग्रामाः ।

२ १र २ ३ ४ ५ २र १र २ १ २
सर्ववी । रःसहावान् । जेतापवा । स्वा३सनि । ता

३ ४ ५ २ १र २ १ २ ३ ४ ५ २ १र
धनानी । तिग्मायुधाः । क्षिप्रध । न्वासमत्सू । अषा

२ १ १ २ ४
ढःसा । क्षा३न्यूत । ना३४३ । सू३शा५त्रू६५६न् ॥(२)

१ १ २ २ ३ ४ ४ २ १र र
उरुगव्य । तो३भर । यानिक्तणवान् । समीचीने ।

२ १ २ ३ ४ ५ २ १ २ २ १
आ३पव । स्वापुरन्धी । अपःशिषा । सा३नुष । सः

३ ४ ५ २ १ ५ २ ३र २ १
सुवर्गाः । ओ३हायि । ओ३हा । औहा । इया२ ।

४ १ २ १ १र २ २
ओ३हा३ए । सक्षिक्रदो । महोअ । म्मा३४३ । भ्या

४
वा५जा६५६न्(३) ॥ १७* ॥ [१] ११

---

* क० गा० ७प्र० २ख० १७सा० ।

अथ त्वमिन्द्रेति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २र ३ १ २
त्वमिन्द्रयशाअस्यृजीषीशवसस्पतिः ।
२ ३ १ २ १ २उ ३ १ ३ १ २ ३ १ २
त्वंवृत्राणिहᳫंस्यप्रतीन्येकइत्पूर्वनुत्तश्चर्षणीधृतिः ॥ १* ॥

हे "इन्द्र ! "त्वं" "शवसस्पतिः" शवसोऽन्नस्य बलस्य वा पालयिता, "ऋजीषी" ऋजीषोऽभिषुतः सोमः तद्वान्, त्वं "यशा असि" यशस्वी भवसि । कथमस्य यशस्वित्वं ? तदाह-- "अप्रतीनि" बलिभिरपि अप्रतिगतानि "वृत्राणि" रक्षांसि "अनुत्तः" अन्यैर्नेतुमशक्यः त्वम् "एकइत्" एकएव असहाय एव "चर्षणीधृतिः" रक्षात्वेन यजमानादि-मनुष्याणां धारकः "पुरु" बहुलं यथा भवति तथा "हंसि" सम्प्रहरसि । अतएवास्य यशस्वित्वम् ॥

"शवसस्पतिः"-"शवसस्पते"—इति पाठौ, "इत्पूर्वनुत्तश्चर्षणीधृतिः"—"नएकइदनुत्ताचर्षणीधृता"—इति च ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ २ १ २ ३ १ २ ३ १ २
तमुत्वानूनमसुरप्रचेतसᳫंराधोभागमिवेमहे ।
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
महीवकृत्तिःशरणातइन्द्रप्रतेसुम्नानोअश्नवन् ॥ २† ॥ १२

* छ० आ० ३, २, १, ६ (१ भा० ५.१२४०)=ऋ० वे० ६, ६, १३, ५ ।

† ऋ० वे० ६, ६, १३, ६ ।

हे "असुर" बलवत्! प्राणवत्! वा हे "इन्द्र!" यः उक्त-गुणोऽस्ति "तं" च "प्रचेतसं" प्रकृष्ट-ज्ञानं "त्वा" "उ" [—इत्यव-धारणे] पितृवत् पोषकं त्वामेव "राधः" धर्मादि-साधनं धनं "नूनम्"*इदानीम् "ईमहे" याचामहे। तत्र दृष्टान्तः—"भाग-मिव" यथा कश्चित् पितृतो भागभूतं धनं याचते, तद्वत्; इन्द्रो यजमानेभ्यः स्तोतृभ्यश्च धनं प्रयच्छत्येव तस्मात् भागभूतं धनं यष्टारो वयं याचामहे। किञ्च हे इन्द्र! "महीव कृत्तिः" [कृत्ति-र्यशोऽन्नं वा कृतीच्छेदने (रु० प०) करणे क्तिन्। कृतन्त्यनेनेति, इदृशी] कृत्तिरिव "ते" तव "शरणा" शरणं गृहम् अन्तरिक्ष-द्युलोके महद् वर्त्तते [अत्र यास्कः—"कृन्ततेर्यशोवान्नं वा। महीव कृत्तिः शरणा त इन्द्र। सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिव (निरु० नै० ५, २२)"—इति]। किञ्च, "ते" तव स्व-भूतानि "सुम्ना" सुम्नानि मन्त्रादि-विषय-सुखानि च "नः" अस्मान् "प्राश्नुवत्" प्रकर्षेणाश्नुवतां व्याप्नुवन्तु [अश्नोतेर्लेट्यडागमः (३, ४, ९४)] ॥ २ ॥ १२

५ ४ २ ४ ५र ४र ५ १
॥ अभीवर्त्तम् ॥ तुवा३मा३यिन्द्रयज्ञाअसोवा। आ

र १र १ २ १ २ ३
ज्जोषोश्र। वसास्था१ता२रयिः। त्ववम्वृत्रा३१२३४। णि

४ ५ र र २ १ २ १ २
हꣳस्यप्रतीनिए। कश्रायित्पृ१रू२। अनूत्ता१श्रा२।

३ २ १ ३ १ १ १ १ ५ ४ २ ४
षणा३यि। धा२३४५। ना२३४५यिः ॥(१) अनू३त्ता३श्व

---

* 'निश्चितम्'—इति वि०।

५र ४ ५ १ २ १ २ १
र्षणीधृतौवा। आनुत्तस्व। षणायिधा१र्त्ता२यिः। ता
र१ ३ ४५ २१ २ र१
मुत्वानू३१२३४। नमसुर। प्रचायिता१सा२म। राधो
२ ३२ १ ३११११
भा१गा२म्। दूवा३यि। मा२३४५। हा२३४५यि ॥(२)
५र४ २ ४ ५र ४५ १ र२र १ २
राधो३भा३गमिवेमहोवा। राधोभागम्। दूवायिमा१
२र २ २४५र २१२
हा२यि। माहोवका३१२३४। तिःशरणा। नआ्आ१
१ २ ३र२ १
यिन्द्रा२। प्रतायिह्व१म्ना२। नोआ३। आ२३४५।
३१११११
वा२३४५न्(३) ॥ १८* ॥ [१]

२१ ४ ५र
॥ दिचिङ्कारम्वामदेव्यम् ॥ तुवमा२३यिन्द्रयशाअसा
१र र र र
यि। आज्ञोषीशवसस्पतिस्त्वम्वृत्राणिहᳪस्यप्रतीनआयि
२३र२ १ १ २ १ २३र २
कओहो३। ऊम्मा२। पू२३ह्व। अनुत्तआर्षणीहो३।
१ १ ४५ २१ ४
ऊम्मा२। धृतायिः। औ२३होवा ॥(१) अनुत्ता२३स्व
५र १ र रर २
र्षणीधृतायिः। आनुत्तस्वर्षणीधृतस्तमुत्वानूनमसुराऽप्र

१ ऋ० गा० ७प्र० २अ० १८सा०।

३र २ १ १ २ १र र र ३र
चोहो३ । ऊम्मा२ । ता२३साम् । राधोभागाऽमिवी

२ १ १ २ ४ ५ २र१र
हो३ । ऊम्मा२ । महा । औ३होवा ॥(२) राधोभा

४ ५र १ र र र र र
३गमिवेमहायि । राऽधोभागमिवेमहेमहोवह्ऌत्तिःशरणा

२ ३र २ १ १ २ १र २
ऽतऔहो३ । ऊम्मा२ । आ२३यिन्द्रा । प्रतेशुम्नाऽन

३र २ १ १ ४ ५ ४
औहो३ । ऊम्मा२ । अवान् । औ२३होवा । हो५ई ।

डा(३) ॥ ७ * ॥ [२]

१ २ १ २ १र २ र
॥ यशम् ॥ त्वमिन्द्रा । यशाः । असायि । ऋजी

१र २ १ २ २ १ ३ २ १ र
षीशवसः । पतायिः । त्वम्वृत्राणी३हꣳसिथा । प्रती

१ २ १ ३ ५र र
नाए२ । कद्रत्पूरु२हो१ । तश्च । षा२णा२३४औहो

३ ५ १ २ १ २ १र
वा । धा२३४र्त्ताः ॥(१) अनुत्तश्चा । अनुत्तश्चा । षणी ।

२ र १ २ र २
धृतायिः । अनुत्तश्चर्षणी । धृतायिः । तमुत्वानू३नम

३ २ १ १ १र
सुरा । प्रावा२यि । तासा२म् । राधा२हो१यि ।

---

* ऊ० गा० १६प्र० २ख० ७सा० ।

र २ १ ३ ५र र ३ ५
भागम्। आ२यिवा२३४औहोवा। मा२३४हे॥(२)

१र२ र १ २र र र १र र र
राधोभागाम। राधोभागाम्। हुवे। महायि। राधो

२र १ २र २ १ र २ ३ २ १
भागमिवे। मह्यायि। मह्योवका३र्त्तिःशरा। पाता२

१ १ २र २
यि। आयिन्द्रा२। प्रता२यिह्योश्यि। सुम्ना। नोर२

३ ५र र ३ ५
आ२३४औह्योवा। म्रा२३४वान्(३)॥ १४ *॥ [३] १२

यजिष्ठन्त्वेति प्रगाथात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

१ २ २ १ २ ३ १ २र ३ १ २
यजिष्ठन्त्वाववृमहे देवन्देवत्रा होतारममर्त्त्यम्।

३ २ ३ १ २ ३ १ २
अस्ययज्ञस्यसुक्रतुम्॥ १ †॥

हे अग्ने! "यजिष्ठं" यष्टृतमं "त्वा" त्वां "ववृमहे" वृणीमहे सम्भजामहे। कीदृशं त्वाम्? "देवत्रा" देवेषु मध्ये "देवम्" अतिशयेन दानादि-गुणकम्, "होतारं" देवानामाह्वातारम्, "अमर्त्त्यम्" अविनाशिनम्, "अस्य" "यज्ञस्य" यागस्य "सुक्रतुं" सुष्ठु कर्त्तारम्॥ १॥

---

* ऊ० गा० १८प्र० १खा० १४सा०।

† छ० आ० २, १, २, ६ (१भ. । २८३ पृ०)=ऋ० वे० ६, १, १९, ३।

अथ द्वितीया ।

२ १ १र ३ १ २ ३ १ २ ३ २३ १ २
अपान्नपातꣳसुभगꣳ*सुदीदितिमग्निमुश्रेष्ठ†शोचिषम् ।
१ २ ३ १ ३ १ २ ३ २ ३ २उ ३ १ २ २ २
सनोमित्रस्यवरुणस्यसोअपामासुम्नंयक्षतेदिवि ॥ २‡ ॥१२

"ऊर्जः" अन्नस्य "नपातं" न पातयितारं¶ [ यद्वा, नप्तारं चतुर्थं हविर्लक्षणेनान्नेन आपो जायन्ते, अद्भ्यश्चौषधि-वनस्पतयस्तेभ्य एष जायत इति चतुर्थत्वम्§। "नभ्रान्नपात् ( ६, ३, ७५ )"—इति नञ् प्रकृतिभावः ] "सुभगं" शोभन-धनं "सुदीदितिं" सुष्ठु दीदयन्तं "श्रेष्ठशोचिषं" प्रशस्यतम-तेजस्कम् अग्निं स्तौमीति शेषः। स तादृशोऽग्निः "नः" अस्मदर्थं "दिवि" द्योतमाने देवयजने द्युलोके वा "मित्रस्य" देवस्य "वरुणस्य" च "सुम्नं" सुखम् "आ" अभिलक्ष्य "यक्षते" यजतु। तथा सोऽग्निः "अपाम्" अब्देवतानाञ्च सुम्नमभि यजतु ॥ २ ॥ १२

३ ४ २ ४ ५
॥ साध्यम् ॥ याऽ५जि । इन्द्वा३वा३वा३वृमहायि ।
२र१९ र र २ १ १ १ ७
देवन्देवत्राहोता२३राम् । आमर्त्तियम् । आस्ययाज्ञा

* "ऊर्जोनपातं"—इति ऋ० पाठः ।

† "अग्निश्रेष्ठ"—इति च ऋ०-पाठः ।

‡ ऋ० वे० ६, १, २९, ४ ।

¶ ऋग्वेदीयपाठमवलम्ब्यैवं व्याख्यानम् ।

§ 'अपां नपातम्—अपां पौत्रमग्निम् । अपां पुत्रका वृक्षाः, तेषु सञ्जातं पुत्रं पौत्रम्'—इति वि० ।

१ ४ २ ५ २
२३ । स्था२३सू३ । क्रा३४५तो६हायि ॥(१) आऽ५पुस्य ।
४ २ ४ ५ ३ १र र २ १र
यज्ञा३स्या३सुक्रतुम् । अपान्नपातꣳसुभा२३गाम् । सुदी
२ १ ७ १ ४ २
दितिम् । आग्निमूश्रे२३ । ष्ठा२३शो३ । चा३४५यिषो
५ २ ४ २ ४र ५ १
६हायि ॥(२) आऽ५ग्निम् । उश्रे२ष्ठा३शोचिषाम् । स
र २ १ र २ र १ ७
नोमित्रस्यवरु२३णा । स्यासोअपाम् । आसुम्नाया२३ ।
१ ४ २ ५
सा२२ता३यि । दा३४५यिवो६हायि(३) ॥ ३* ॥ [१]

२ र १ २ र १ र
॥ ऐध्मवाहसम् ॥ यजिष्ठन्त्वावनृमाहायि । देवन्देव
र र र
त्राहोतारममर्त्तियाम् । अस्ययज्ञस्यसुदृहा । अस्ययज्ञ
१ ५ ४ ५
स्यसूऽदृहा । ऊयायि । ऊवो२३४वा । क्रा५तो६हा
२ १ २ १र र
यि ॥(१) असायज्ञस्यसुक्रातूम् । अपान्नपातꣳसुभगꣳ
र र र र र
सुदीदितायिम् । अग्निमुश्रेष्ठशोदृहा । अग्निमुश्रेष्ठाशो
५ ४ ५
ऽदृहा । ऊवायि । ऊवो२३४ । वा । चा५यिषो६हा

* ऊ० गा० ८म० १ख० ३सा० ।

२ ३ २ ३ १ २ ३ १ २
यि ॥(२) अग्निमुश्रेष्ठशोचायिषाम् । सुनोमित्रस्यवरुण
२ ३ २
सोअपाम् । आसुम्नंयक्षताऽइहा । ऊवायि । ऊवो२
३४ । वा । दा५यिवोई३हायि(३) ॥ ३* ॥ [२] १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

अथ पञ्चम-खण्डे —

यमग्नइति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ २उ ३ १ २ १ २ ३ १ २ ३ २
यमग्नेपृत्सुमर्त्यमवावाजेषुयञ्जुनाः ।
२उ ३ १ २ ३ १ २
सयन्ताशश्वतीरिषः† ॥ १‡ ॥

हे "अग्ने !" "पृत्सु" सङ्ग्रामेषु "यं" "मर्त्यं" यजमानम् "अवाः" अवसि रक्षसि, "यं" पुरुषं "वाजेषु" सङ्ग्रामेषु "जुनाः" अवसि, "सः" नरः यजमानः "शश्वतीरिषः" तित्यान्न-

---

* ऊ० गा० १८प्र० १ख० ३सा० ।

† "स्वाहा"—इति यजुष्यधिकः पाठः ।

‡ ऋ० वे० १, ९, २१, २ = य० वे० ६, २९ ।

आनि "यन्ता" नियन्तुं समर्थो भवति [पृत्सु—"पदादिषु मांस्पृत्स्नूनामुपसङ्ख्यानम् (६,१,६३)"—इति पृतना-शब्दस्य पदादेशः "साविकाच (६,१,१६८)"—इति विभक्तेरुदात्तत्वम्। अवाः—अवः अकाराकारयोर्विपर्य्ययः, यद्वा लेटाऽडागमः, "इतश्च (३, ४,९७)"—इति सिप इकार-लोपः। जुनाः—जुइति गत्यर्थः सौत्रो धातुः, लङ्, सिप्, क्र्यादिभ्यः श्ना; "बहुलञ्छन्दस्यमाङ्योगेऽपि (६,४,७५)"—इत्यडागमाभावः; यद्वृत्तयोगात् (८,१,३०)" अनिघातः। यन्ता—तृनो नित्त्वादाद्युदात्तत्वम् (६,१,१९७)। शश्वतीः—"उगितश्च (४,१,६)"—इति ङीप्॥ १॥

अथ द्वितीया।

१ २ ३ १र २र
नकिरस्यसहन्त्यपर्येताकयस्यचित्।
१ २ ३ १ २
वाजोअस्तिश्रवाय्यः॥ २*॥

हे "सहन्त्य!" शत्रूणामभिभवन-शीलाग्ने! "अस्य" त्वद्भक्तस्य यजमानस्य "कयस्यचित्" कस्यापि "पर्येता नकिः" आक्रमिता नास्ति। किञ्चास्य यजमानस्य "श्रवाय्यः" श्रवणीयः "वाजः अस्ति" बल-विशेषोऽस्ति† ॥ २॥

* ऋ० वे० १, २, २३, ३।

† 'वाजमन्नं'—इति वि०।

अथ तृतीया।

१र २र ३ १ २ ३ १ २ ३ १ २
सवाजंविश्वचर्षणिरर्वद्भिरस्तुतरुता।
१ २ ३ १ २
विप्रेभिरस्तुसनिता॥ ३*॥ १४

"विश्वचर्षणिः" सर्वैर्मनुष्यैरुपेतः† "सः" अग्निः "अर्वद्भिः" अश्वैः‡ "वाजं" सङ्ग्रामं "तरुता" तारयिता "अस्तु" "विप्रेभिः" मेधाविभिः ऋत्विग्भिः सहितः तुष्टोऽग्निः "सनिता" फलस्य दाता¶ [ विश्वचर्षणिः—विश्वे चर्षणयः अस्य "बहुव्रीहौ विश्वं सञ्ज्ञायाम् ( ६, २, १०६ )"—इति पूर्वपदान्तोदात्तत्वम्। अर्वद्भिः—ऋ गतौ ( भ्वा० प० ), "अन्येभ्योऽपि दृश्यते ( ३, २, ७५ )"—इति वनिप्, भिसि "अर्वणस्त्रसावनञः ( ६, ४, १२७ )"—इति नकारस्य तृ-इत्ययमादेशः। तरुता—तॄ प्लवन-तरणयोः (भ्वा०प०), अस्मात् "ग्रसित-स्कभित- ( ७, २, ३४ )—इत्यादौ तृन्नन्तो निपातितः, निपातनादेवेकारस्योत्वम् ] ॥ ३ ॥ १४

---

* ऋ० वे० १, २, २३, ४।

† 'विश्वस्य द्रष्टा'—इति वि०।

‡ 'अर्वद्भिः—तृतीयाबहुवचनं चतुर्थीबहुवचनस्य स्थाने द्रष्टव्यम्, अर्वद्भ्यः'—इति वि०।

¶ 'विप्रेभिः—विप्रेभ्यः सनिता, त्वां मुक्त्वा न कश्चिदन्यो दाता'—इति वि०।

अथ साकमुच इति त्वचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

३ १२ ३ १ २ ३
साकमुक्षोमर्ज्जयन्तस्वसारो

१ ३ १ २ १ २ ३ १ २
दशधीरस्यधीतयोधनुत्रीः ।

२ ३ १ २ १ १र २र ३
हरिःपर्य्यद्रवज्जाःसूर्य्यस्य

१ २ ३ २ ३ २ १ २
द्रोणन्ननक्षेअत्योनवाजी ॥ १* ॥

"साकमुचः" सह युगपत् सिञ्चः [उच सेचने (भ्वा०प०) क्विपि रूपम्, तादृश्यः] "स्वसारः" कर्म्म-करणार्थम् इतस्ततः सुष्ठु गच्छन्त्यः अङ्गुलयः "मर्जयन्त" सोमं शोधयन्ति [मृजू शोध-नालङ्करणयोः ( अदा० प० ) ]। तथा "दश" दश-सङ्ख्याकाः "धीतयः" [ अङ्गुलि-नामैतत् ( निघ०२, ५, ७ ) ] "धीरस्य" समर्थस्य यज्ञस्य वा देवैर्ध्यातव्यस्य काम्यमानस्य वा सोमस्य "धनुत्रीः" प्रेरयित्रो भवन्ति। ततः "हरिः" हरितवर्णः सोमः "सूर्यस्य" "जाः" प्रादुर्भूता जाया दिशः ताः "पर्यद्रवत्" परितो गच्छति [ सूर्यस्य तेजसा हि आविर्भवन्तीति दिशान्तस्य जायात्वम् ] "अत्यः" अतनशीलः "वाजी न" अश्व इव स्थितः सोमः "द्रोणं" द्रोणकलशं "ननक्ष" व्याप्नोति [ नक्षतिर्व्याप्ति-कर्मा ( निघ० २, १८, २ ) ] ॥ १ ॥

* ऋ० आ० ६, १, ५, ६ (२भा० ११६पृ०) = ऋ० वे० ७, ४, २, १ ।

अथ द्वितीया ।

२ ३ २ ३   २र   ३ १र
सम्मातृभिर्न्नशिशुर्वावशानो
२र   ३ १ २ ३ २
वृषादधन्वेपुरुवारोअद्भिः ।
२ ३ १र २र ३ १ २ ३ १र
मर्योनियोषामभिनिष्कृतंयत्
२र   ३ १ २ ३ १ २
सङ्गच्छतेकलशउस्रियाभिः ॥ २* ॥

"वावशानः" देवान् कामयमानः "वृषा" कामानां वर्षकः अतएव "पुरुवारः" बहुभिर्वरणीयः सोमः "अद्भिः" मातृभूताभिः वसतीवरीभिः "सं दधन्वे" सन्धार्यते । तत्र दृष्टान्तः— "मातृभिर्न शिशुः" कामयमानः पुत्रो यथा मातृभिः पयःप्रदानेन सन्धार्यते [धवि गत्यर्थः (भ्वा० प० ) कर्म्मणि लिटि रूपम्] "मर्यो न" मनुष्यो यथा "योषां" युवतिम् अभिगच्छति तद्वत्, "निष्कृतं" संस्कृतं स्वस्थानम् "अभि यन्" अभिगच्छन् "कलशे" द्रोणाभिधाने "उस्रियाभिः" अद्भिः गोविकारैः क्षीरादिभिर्वा "सङ्गच्छते" [गमेरकर्मकात् "समोगम्यृच्छिभ्याम् ( १, ३, २९ )"—इत्यात्मने पदम् ॥ २ ॥

---

* ऋ० वे० ७, ४, ३, २ ।

† 'आदित्यरश्मिभिः'—इति वि० ।

अथ तृतीया ।

३ १र २र ३ २ ३ १ २ ३
उतप्रपिप्यऊधरघ्न्याया

२ ३ १ २ ३ २
इन्दुर्धाराभिःसचतेसुमेधाः ।

३ २ ३ २ ३ १ २ ३ २ ३ १
मूर्द्धानङ्गावःपयसाचमूष्वभि

२ ३ १ २ ३ २ ३ २
श्रीणन्तिवसुभिर्न्ननिक्तैः ॥ ३* ॥ १५

"उत" अपि च "अघ्नयायाः" ["अघ्न्या"—इति गो नाम (निघ० २, ११, १)] अहं तथाविधाया गोः "ऊधः" पयः-स्थानं सोमः "प्रपिप्ये" ओषध्यादिषु सोमः प्रविश्य प्रकर्षेण प्याययति [प्यायतेर्लिटि "लिड्यङोश्च (६, १, २९)"—इति पी-भावः] "सुमेधाः" शोभन-प्रज्ञः सोऽयम् "इन्दुः" सोमः "धाराभिः" "सचते" समवेति सङ्गच्छते। ततो "गावः" "चमूषु" [चमन्ति भक्षयन्त्यत्र सोममिति चम्वो ग्रहादयः, तेषु] स्थितं "मूर्द्धानं" समुच्छ्रितमिमं सोमं "पयसा" उदकेन "अभि श्रीणन्ति" अभित आच्छादयन्ति† । तत्र दृष्टान्तः— "निक्तैः" प्रक्षालितैः "वसुभिः" वस्त्रैः यथा आच्छादयन्ति तद्वत् ॥ ३ ॥ १५

---

* ऋ० वे० ७, ४, २, ३ ।

† 'अभिश्रीणन्ति मिश्रयन्ति'—इति वि० ।

१र २र ३र २ १ ३ १
॥ इन्द्रस्य वासिष्ठम् ॥ औहोवाहा ३ होयि। इन्द्रा।
२ १ २ १ २ ३ ४ ५ २ १ र २
साकमुक्षो। मर्जय। तस्वसाराः। दशधीरा। स्या
१र २ ३ ४ ५ २ १ २ १ र २ १
इधीत। योधनुत्रीः। हरिःपर्य्या। द्रवज्जाः। सूरि
४ ५ २र २ १ २ २ ४
यस्या। द्रोणन्नना। क्षे३अति। यो३४३। ना३वा५
२ १र २ १ २ २ ४
जा६ ५ ६यि ॥(१) सम्मातृभायिः। नमिप्तुः। वावशा
५ २ १र २ १ २ ३र ४ ५ २ १र
नाः। वृषादधा। व्ये३पुरु। वारोअक्षायिः। मर्य्यो
२ १ २ २ ४ ५ २ १ २
मयो। षा३मभि। निष्कृतंयान्। सङ्ग्च्छतायि। क
१ र २ २ ४ २ १
लशे। ऊ३४३। स्वौ३या५भा६५६यिः ॥(२) उतप्रपायि।
२ १र २ ३ ४ ५ २ १ र २ १
घ्या३ऊधः। अघ्नियायाः। इन्दुर्द्धारा। भी३ःसच।
१ २ ४ ५ १र १र २ १ २ २ ४ ५ १र
तेस्तुमेधाः। मूर्द्धानङ्गा। वा३ःपय। साचमूषु। औ
१र ३र २ १ २ २ १ र १ १ २
होवाहा३होयि। इन्द्रा। औभिश्रीणा। ती३वस्तु। भा
२ ४
३४३यिः। ना३ना५यिक्ता६५६यिः(३) ॥ ७ ॥ [१]

* ऊ० गा० ८प्र० १ख० ७सा०।

॥ पार्थम् ॥ ओ३हो३होयि। साकमुक्षो। मर्ज्ज
य। तस्वसाराः। दशधीरा। स्या३धीत। योधनु
त्रीः। हरिःपर्य्या। द्रवज्जाः। हरियस्या। द्रोणन्न
ना। क्षे३अति। यो३४३। ना३वा५जा६५६यि ॥(१)
सम्मातृभायिः। नक्षिप्तुः। वावशानाः। वृषादधा।
न्ने३पुरु। वारोअड्डायिः। मर्य्योनयो। षा३मभि। नि
ष्कृतंयाम्। सङ्गच्छमायि। कलशे। ऊ३४३। स्त्री
३या५भा६५६यिः ॥(२) उतप्रपायि। प्या३ऊधः। अघ्नि
याया। इन्दुर्द्धारा। भी३ःसच। तेसुमेधाः। मूर्द्धा
नङ्गा। वा३ःपय। साचमूषू। औ३हो३होयि। अभि
श्रीणा। न्ती३वसु। भा३४३यिः। ना३ना५यिक्ता६५६
यिः(३) ॥ ८ ॥ [२]

* ऋ० गा० १२प्र० १अ० ९सा०।

१ २ १ र २
॥ औशनम् ॥ साकाम्। उक्षोमर्ज्जयन्ता। स्वसा

२ १ २र १ २ १र १र २ ४ ५ १
३राः। दशधीरा। स्याऽ३धीत। योधनुत्रीः। हरिः

र १ २ र १ २ १ २ १
पर्य्यद्रवज्जाःसू। रियार२३स्या। द्रोणन्नना। चे३अति।

२ २ ४ १ २ १
यो३४३। नाऽ३था५जाऽ६५६यि॥(१) साम्मा। नृभिर्न

२ २ १ २ १ २ १ २ ३र
श्रिपूर्वा। वश्राऽ२नाः। वृषाऽदधा। न्वेऽ३पुरु। वारो

४ ५ १ र र १ २
अन्नायिः। मर्य्यौनयोषासभिनायिः। क्रताऽर२३यान्।

१ १ १ २ १ र २ २ ४ २
सङ्क्कतायि। कलशे। ऊ३४३। सीऽ३या५भाऽ६ ५ ६

१ १ र २ १
यिः॥(२) ऊता। प्रपिप्यऊधरा। घियाऽ३याः। इन्द

२र १ २ १ १२३४५ १र र र
द्वीरा। भीऽ२ःसच। तेस्तुमेधाः। मूर्द्धानङ्गावःपयसा।

७ २ र २ १ ९ १
चमू२३षू। अभिश्रीणा। तीऽ३वसु। भाऽ३४३यिः। ना

४
ऽ३ना५यिक्ताऽ६५६यिः(३)॥ ४ ॥ [३] १५

---

* ऊ० गा० १८प्र० २खा० ४सा०।

अथ पिबासुतस्येति प्रगाथात्मकं तृतीयं सूक्तम्,—

तत्र प्रथमा ।

१२ ३१२३२३ १२ ३१२
पिबासुतस्यरसिनोमत्स्वानइन्द्रगोमतः ।
३१२ ३१२३२ १ २ ३१२
आपिर्नोबोधिसधमाद्योवृधे५ऽ३ऽस्मा४ँअवन्तुतेधियः ॥ १* ॥

हे "इन्द्र !" "रसिनः" रसवतः "गोमतः" गोविकारैः पयः-प्रभृतिभिः अयण-द्रव्यैर्युक्तस्य "नः" अस्मदीयस्य "सुतस्य" अभिषुतस्य ["क्रियाग्रहणं कर्त्तव्यम्"—इति कर्मणः सम्प्रदान-त्वाच्चतुर्थ्यर्थे (२, ३, ६२)—षष्ठी] ईदृशं सोमं "पिब", पीत्वा च "मत्स्व" तृप्तो भव । अपि च त्वं "सधमाद्ये" सह मादयितव्ये सहितैरस्माभिस्तर्पयितव्ये सोमे "आपिः" आपयिता बन्धुः सन् "नः" अस्माकं "वृधे" वर्द्धमानाय "बोधि" बुध्यस्व "ते" त्वदीया "धियः" बुद्धयः अनुग्रहात्मिकाः "अस्मान्" स्तोतॄन् "अवन्तु" रक्षन्तु ॥

"सधमाद्ये"-"सधमाद्यः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३१२ ३२ ३ १२ ३१२ ३२ ३१२
भूयामतेसुमतौवाजिनोवयम्मानस्तरभिमातये ।
३२३१२ ३१२३१२ ३१२
अस्माञ्चित्राभिरवतादभिष्टिभिरानःसुम्नेषुयामय ॥२†॥१६

* ऋ० आ० ३, ४, ५, ७ (१भा० ४९५पृ०) = ऋ० वे० ५, ७, २५, १ ।

† ऋ० वे० ५, ७, २५, २ ।

हे इन्द्र। "सुमतौ" शोभनायां बुद्धौ अनुग्रह-बुद्धौ "वाजिनः" हविष्मन्तो वयं "भूयाम" वर्त्तमाना भवाम "अभिमातये" अभिमन्यत इत्यभिमातिः शत्रुः* तस्मै तदर्थं "नः" अस्मान् "मा स्तः" माहिंसीः [स्तृञ् हिंसायाम् (क्रया० प०) माङि लुङि छान्दसश्च्लेर्लुक्]। अपितु "अभिष्टिभिः" अभ्येषणीयाभिः प्रार्थनीयाभिः "चित्राभिः" चायनीयाभिः बहुविधाभिर्वा त्वदीयाभिः "ऊतिभिः" "अस्मान्" "अवतात्" [अव रक्षणे (भ्वा० प०)]। तथा "नः" अस्मान् "सुम्नेषु"† सुखेषु "आ यामय"‡ आयताम् कुरु सर्वदा सुखिन एव कुरु ॥ २ ॥ १६

॥ पभीवर्त्तम् ॥ पिबा३सू३नस्य३रसिनोवा। मात्स्वान इ। द्रगोमा१ता२ः। आपिर्नोवा३१२३४। धिसधमा। दियेवा१ह्वा२यि। अस्मा१आ१वा२। तुता३यि। धा२३४५। या२३४५ः॥(१) अस्मा३आ३वन्तुतेधियोवा। आस्मा१अव। तुतायिधा१या२ः। भूयामता३१२३४ यि। सुमतौवा। जिनोवा१या२म्। मामास्ता१रा२।

* 'अथवा कश्चिद्रोगः'—इति वि०।

† 'सुम्नेषु—यज्ञेषु'—इति वि०।

‡ 'आयापयेत्यर्थः'—इति वि०।

३ २ १ ३ १ १ १ १ ५र ४ २
भिमा३। ता२३४५। या२३४५यि ॥(२) माना३स्ता२

४ ५र ४ ५ १ २ १ २ १ र
रभिमातयोवा। मानस्तर। भिमाता१या२यि। षाक्षा

२ ३ ४ ५र २ १ २
ह्विचा३१२३४। भिरवतात्। अभायिष्टा१यिभा२यिः।

र १ २ ३ २ १ १ १ १
आनाःह्व१स्नार२यि। घुया ३। मा २ ३ ४ ३। या २ ३

१ १
४ ५(३) ॥ ८* ॥ [१]

४ १र ४ ३ ४ ५ ४ ५ २ २
॥ उत्सेधम् ॥ पिबासुतस्यरसिनः। मत्स्वा। नआ

३र ४र ५ २ १र २
३४औहोवा। द्रगोमताऽ२ः। हा३१उवा२३। ऊ३४

५ ३र २ ४र ५र ४ ५ १ २ १
पा। आपा३यिर्नोबो। औहोवाहायि। धायिसधमा।

२ र १ २र २ ५ ३ २
दियेवाहुँ। हा३१उवा२३। ऊ३४पा। अस्मा

४ ५र ४ ५ ३ २ ४
३९अव। औहोवाहायि। तुना३यिधा५या६५६ः ॥(१)

४ ३र ४ र ५र र [३ २ ३र ४ ५
अस्मा९अवन्तुतेधियो। स्मान्। अवा३४औहोवा।

२ १र २ ५ ३ १र ४
तुतेधियाऽ२ः। हा३१उवा२३। ऊ३४पा। भूया३म

* ऊ० गा० ८प्र० १खं० ८सा०।

ता। औहोवाहायि। स्वमतीवा। जिनोवायम्। हाउ३१उवा२३। ऊ३४पा। मानाउ३स्तर। औहोवाहायि। भिमाउ३तापुयाई५६ ॥(२) मानस्तरभिमातये। मानः। स्तरा३४औहोवा। भिमातयाऽ२यि। हाउ३१उवा२३। ऊ३४पा। अस्माउ३स्त्रिवा। औहोवाहायि। भायिरवतात्। अभिष्टायिभिः। हाउ३१उवा। ऊ३४पा। आनाउ३:सुम्ने। औहोवाहायि। पुयाउ३मापुया ई५६। ऊ२३४५(३) ॥ १५* ॥ [२]

॥ निषेधम् ॥ पिबासुतस्याउ३रसिनाः। मत्स्वानआयि। द्रगोमताउ२:। इहाउ३। आपाउ३यिन्नोंबो। हाहोर२३४हा। धायिसधमा। दियेआर२३द्वायि। इहाउ३। आस्माउ३एआवा। हाहोर२३४हा। तुताउ३यिधापुयाई५

* ऊ० गा० १३प्र० १ख० १५गा०।

२ र २र १ २ १ १र १
ई: । अस्मा३ऽअवन्तु३तेधियाः । अस्मा३ऽअवा । तुतेधि

१र १ र ४ ५ १ र ५ १
या२:। इडा२। भूया३मातायि। हाहो२३४हा। सू

१र१ २र १ २ १र १ २ ४ ५
मतीवा। जिनोवा२३याम्। इडा२। माना२स्तारा।

१ ३ ५ ३ १ ४ २र
हाहो२३४वा। भिमा२तापुयाई५ई यि ॥(२) मानस्तर

१र र १ १ १ २ र १ १ १
भौ३मातयायि। मानास्तरा। भिमातया२बि। इडा

१ र ४ ५ २ ३ ५ १ २ १
२। मास्मा२ऽमाविना। हाहो२३४वा। भामिस्तलात्।

२ १ २ १र १ २ ४ ५ २
अभिष्टा२३यिभायिः। इडा२। अस्मा३:अस्मायि। हा

२ ५ ३ २ ४ ३१११ १
हो२३४वा। पुया३मा५याई५ई। ए२३४५(३) ॥१६*॥[३]

५ ४ १ २ ४ ५ १ र र
॥ पृष्ठम् ॥ पिबा२सुतस्यरसिनः। मत्स्वानइन्द्रगो

१ २र १ र र र र १
मता२३वोइया। आपिनोबोधिसधमाद्येवृधा २ ३ वो३

२ १र २ १ २
या। अस्मा३ऽआ२३वा। तुतायिधा२ इया ३ ४ ३: ॥(१)

५ ४ २ ३ ४ र ५ १ र र १
अस्मा३ऽअवन्तुतेधियाः। अस्मा३ऽअवन्तुतेधियार ३ वो

* ऊ० गा० १३प्र० १अ० १६गा०।

२र १र र र र र १ २र
इया। भूयामतेत्तुमतीवाजिनोवयार२३ॐहोइया। मा
१ २ १र २ ५र४ २ ३
नस्तार२३रा। भिमाता२३या३४३यि ॥(२) माना३स्तर
४ र ५ १र र १ २ १र
भिमातयायि। मानस्तरभिमातयार२३यिहोइया। अस्मा
र र १ २र १ १
ञ्चित्राभिरवतादभिष्टिभार२३यिहोइया। आनःसूर२३म्ना
१र २ १
यि। सुयामार२३या३४३। औ२३४५ई। डा(३) ॥१२*॥[४]
२र र र
॥ जमदग्नेःसाम ॥ पिबासुतस्यरसिनोमत्स्वाहाउ।
१ १र २ २ १ र
ना २ः। इन्द्रा २गोमता२३ः। हाउ। आपिन्ना २बो।
१ ७ १र २ १ ७
धिसाधमा २। द्रियेवृधा२३। हाउ। अस्मा ॐ अवा
२ ३ २ १ ३ ५र र २ ३
२३। हा। तुते३होर। या२३४औहोवा। धियऊ
१ १ १ १ २ र र र र
२३४५ ॥(१) अस्मा ॐ अवन्तुतेधियोस्मान्हाउ। आ २।
१ १र २ र १र र १ ७
वन्तू २तेधिया२३ः। हाउ। भूयामा २ते। त्तुमतीवा
१ र २ र १ ७ २
२। जिनोवया२३म्। हाउ। मानास्तरा२३। हा।

* ऊ० गा० १६प्र० ५ख० १९सा०।

२ २ १ ३ १र २ २ ३ १ १ १ १
भिमा३होर। या२३४औहोवा। तयक्र २ ३ ४ ५॥(२)

२र २ २ २ २ १ १ १र
मानस्तरभिमानयेमानोहाउ। स्ता२ः। अभा२यिमा

२ १र २ १ ७
तया२३यि। हाउ। अस्मान्वा२यिन्वा। भिरावता२

१ २ २ १ ७
त्। अभिष्टिभा२३यिः। हाउ। मानास्तुन्ना २ ३ यि।

१ ३ २ १ २ ५र २ १ ३
हा। षुया ३ हो २। या २ ३ ४ औहोवा। मयक्र

१ १ १ १
२ ३ ४ ५(३) ॥ १६* ॥ [५] १६

अथ त्रिरस्मैसप्तेति तृचात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

१ २ ३ २ ३ १ २
त्रिरस्मैसप्तधेनवोदुदुह्रिरे

३ २ ३ १ २ ३ १ २
सत्यामाशिरम्परमेव्योमनि।

३ २ ३ १र २र ३ २ ३
चत्वार्यन्याभुवनानिनिर्णिजे

१ २ ३ २ ३ १र २र
चारूणिचक्रेयदृतैरवर्द्धत ॥ १† ॥

* ऊ० गा० ३८प्र० २ख० १६गा०।

† छ० आ० ६, २, २, ७ (२भा० १८८पृ०) = ऋ० वे० ७, २, २३, १।

"परमे व्योमनि" विविधमोममवनं गमनं देवानामत्रेति व्योमा यज्ञः, तस्मिन् स्थिताय यद्वा परमे व्योमनि अन्तरिक्षे वर्त्तमानाय "त्रिः सप्त" एकविंशति-सङ्ख्याकाः "धेनवः" प्रोण-यितरो गावः "सत्यां" सत्यं यथार्थभूतम् "आशिरम्" आश्रयमाणं "दुदुह्रिरे" दुहन्ति [यद्वा, त्रिःसप्त द्वादश मासाः पञ्चर्त्तवः त्रय इमे लोका असावादित्य एकविंश इति, एतैः सर्वैः सह गोषु उत्पद्यते तद्गावो दुहन्तीति]। किञ्चायं सोमः "अन्या" अन्यानि "चत्वारि" "भुवनानि" उदकानि वसतीवरीस्तिस्त्रैकधना इति, तानि चतुःसङ्ख्याकानि "चारुणि" कल्याणानि उदकानि "नि-र्णिजे" निर्णेजनाय परिशोधनाय "चक्रे" करोति। "यद्" यदा अयम् "ऋतैः" यज्ञैरेव "वर्द्धितः" वर्द्धितवान् तदा करोति॥

"दुदुह्रिरे," "परमेव्योमनि"-"दुदुह्रे," "पूर्वे व्योमनि"—इति पाठौ॥ १॥

अथ द्वितीया।

१२ २र ३ १ २ १ १ २
सम्र्मक्षमाणोअमृतस्यचारुण

१२उ ३ १ २ ३ १ २
उभेद्यावाकाव्येनाविशश्रथे।

१ २ ३ १ ३ २३ १ २ ३
तेजिष्ठाअपोमᳪहनापरिव्यत

१ २ ३ १ ३ २ २ ३ १ २ ३ २
यदीदेवस्यश्रवसासदोविदुः॥ २*॥

* ऋ० ७, १, २३, २।

"सः" "भक्ष्यमाणः" "चारुणः" कल्याणस्य "अमृतस्य" उदकस्य ["क्रियाग्रहणमिति कर्म्मणः सम्प्रदान-सञ्ज्ञा, "चतुर्थ्यर्थे बहुलम् (२, ३, ६२)"—इति षष्ठी] चारूदकं भक्ष्यमाणः [इकारलोपश्छान्दसः (३, ४, ९७)] भिक्ष्यमाणः यष्टृभिः याच्यमानः सन् "उभे" "द्यावा" [द्यावादेशस्य द्वन्द्वे विहितत्वात् उत्तरपदाभावेऽपि द्वन्द्वः प्रतीयते] उभे द्यावापृथिव्यौ "काव्येन" कवि-कर्म्मणा "वि शश्रथे"* विहतकारातिशयेन निमित्तेन प्रश्नेनोदकेन सम्पूरयतीत्यर्थः। किञ्च "तेजिष्ठाः" अतिशयेन दीप्तानि "अपः" उदकानि "मंहना" महत्त्वेन "परि व्यत" तदा परित आच्छादयति। "यदि" यदा ऋत्विजः "देवस्य" द्योतमानस्य सोमस्य "सदः" स्थानं "अवसा"† हविषा युक्ताः सन्तः "विदुः" यागार्थं जानन्ति लभन्ते तदा आप्नोतीति। [विद ज्ञाने (अदा० प०) "सिजभ्यस्त (३, ४, १०९)"—इति झेर्जुसादेशः॥

"भक्ष्यमाणः"-"भिक्ष्यमाणः"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ ३ १र २र ३ १
तेअस्यसन्तुकेतवोऽमृत्यवो
२ ३ १ २ ३ १र २र
दाभ्यासोजनुषीउभेअनु।

---

* 'विशश्रथे—विविधं शिथिलीकरोति'—इति वि०।

† 'अवसा—अन्नेन बलेन वा'—इति वि०।

१ २ ३ १ २ ३ २र ३ १
येभिर्नृम्णाचदेव्याचपुनत

२र ३ १ २
आदिद्राजानम्मननाअगृभ्णात ॥ ३* ॥ १७

"अस्य" एतादृशस्य सोमस्य "केतवः" प्रज्ञापकाः सर्वैर्ध्याय-नीया रश्मयः। कीदृशाः? "अमृत्यवः" मरण-धर्म-रहिताः अत-एव "अदाभ्यासः" ["दभेश्चेति वक्तव्यम् ( ७, ३, ६८ वा० )"—इति ण्यत्] परैरहिंस्यास्त्वेतादृशा अस्य रश्मयः "उभे" "अनुषी" जन्मना स्थावर-जङ्गमात्मके द्वे "अनु" लक्षीकृत्य "सन्तु" रचन्तु [ओषधीनामग्रे सोमो रेतो निषिञ्चति यस्माः मनुष्याणाञ्च धाराः स्रवति खलु] सोऽयं "येभिः" यैः केतुभिः "नृम्णा" नृम्णानि बलानि "देव्या" देवार्हाणि चान्नानि "पुनते" प्रेरयति। "आदित्" अभिषवानन्तरमेव† "राजानं" सोमं "मनना:" मननीयाः स्तुतयः "अगृभ्णात" परिगृह्णन्ति प्राप्नुवन्तीत्यर्थः "हृग्रहो:"—इति छान्दसो भकारः॥ ३ ॥१७

१ ५र ४ ५र ४५र र
॥ मारुतम् ॥ चा२ ३ ४यिः। अस्मैसप्तधेनवोदुदो।

४ ५ २ १र र २ र १
ह्रोऽवायिरायि। सत्यामाशिरम्परमायि। वियोमानी२।

---

* ऋ० तै० ७, १, २३, ३।

† 'आत्' -'इत्'—इति पदपुरणौ—इति वि०।

१र र २ १ २ ३
चत्वार्य्यन्याभुवना । निनिर्णायिजा२३यि । चारूणा२३

५ १र १ २र ५ २ ४
४यिवा । क्रेयहतैः । आवा२३र्ह्वाँ५ता६५६ ॥(१) सा२३

५ र र ४ ५र ४ ५ १ र र र र
४ः । भचमाणोअमृतस्यचौ । चारूणाः । उभेद्यावाका

र २ २ र र र
व्येना । विप्रआथा२यि । तेजिष्ठाअपोमएँहना । परि

२ ३ ५ २ १ २र १ २
व्याता२३ । यादीदा२३४यिवा । स्यश्रवसा । सादो३

४ १ ५ र ४ ५र र
वा५यिदू६५६ः ॥(२) ते२३४ । अस्यसन्तुकेतवोअमौ ।

४ ५ १ र र र २र १ १र
होर्म्यावाः । अदाभ्यासोजनुषी । उभेआनू२ । येभि

र र २ १ २ ३ ५
नृम्णाचदेव्या । चपुनादा२३यि । आदिद्रा २ ३ ४जा ।

२१ २र १ २ ४
नम्मननाः । आगा३म्णी५ता६५६(३) ॥ १२* ॥ [१] १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

पञ्चमः खण्डः ॥ ५ ॥

---

* ऊ० गा० प्र० १ ख० १२ सा० ।

अथ षष्ठे खण्डे—

अभिवायुमिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

३ २ ३ २ ३क २र ३ २
अभिवायुंवीत्यर्षागृणानो

२ ३ १र १र ३ १ २
ऽ३ऽभिमित्रावरुणापूयमानः।

३ १र २र ३ १ २ ३ २
अभीनरन्धीजवनᳪरथेष्ठा

३ १ ३ १ २ ३ १ २
मभीन्द्रंवृषणंवज्रबाहुम्॥ १* ॥

हे सोम! "गृणानः" स्तूयमानस्त्वं "मित्रावरुणा" मित्रावरुणौ च पानाय "अभि" गच्छ। किञ्च "नरं" सर्वस्य नेतारं, "धीजवनं" बुद्ध्या समं वेगं कुर्वाणं,† "रथेष्ठां" रथे तिष्ठन्तम् [अनेनाश्विनावभिधीयते; एकवचनन्तु प्रत्येक-विवक्षया समुदाय-विवक्षया वा; एतादृशावश्विनौ चाभिगच्छ]। तथा "वृषणं" कामानां वर्षकं "वज्रबाहुं" वज्र-युक्त-हस्तम् "इन्द्रं" च त्वं पानाय "अभि" गच्छ॥ १॥

---

* ऋ० वे० ७, ४, २०, ४।

† 'धीजवनं—धीर्बुद्धिः तथा जवनं वेगवन्तं, अथवा मनोजवैरश्वैः गन्तारम्' —इति वि०।

अथ द्वितीया ।

२ १ १र २ १ २ ३ ३ ३ २ ३ १ २ ३ १ २
अभिवस्त्रासुवसनान्यर्षाभिधेनूःसुदुघाःपूयमानः ।
३ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
अभिचन्द्राभर्त्तवेनोहिरण्याभ्यश्वान्रथिनोदेवसोम ॥ २* ॥

हे "सोम !" अस्माकं "सुवसनानि" सुपरिधानानि "अभि" गमय [ यद्वा, सुवसनानि शोभन-वस्त्र-सहितानि "वस्त्रा" वस्त्राण्याच्छादकानि धनानि "अभि" गमय। किञ्च "पूयमानः" पवित्रेण त्वं "सुदुघाः" सुष्ठु पयसो दोग्ध्रीः "धेनूः" नवप्रसूतिका गाः "अभि" प्रापय। अपिच "चन्द्राणि" आह्लादकानि† "हिरण्यानि" "भर्त्तवे" भरणाय पोषणाय "नः" अस्माकम्‡ "अभि" गमय। तथा हे "देव" स्तोतव्य ! हे "सोम !" "रथिनः" रथवतः अश्वान् अस्माकम् "अभि" प्रापय ॥ २ ॥

अथ तृतीया ।

२ १ २ ३ १र २र ३ २उ ३ १ २ ३ १ २
अभीनोअर्षदिव्यावसून्यभिविश्वापार्थिवापूयमानः ।
३ २उ ३ १ २ ३ १ २ ३क २र ३ १ २ ३ १ २
अभियेनद्रविणमश्नवामाभ्यार्षेयञ्जमदग्निवन्नः ॥ ३¶ ॥१८

हे सोम ! पवित्रेण "पूयमानः" त्वं "दिव्या" दिव्यानि

* ऋ० वे० ७, ४, २०, २।

† 'चन्द्राणि—कान्तानि'—इति वि० ।

‡ 'नः—अस्मभ्यम्'—इति वि० ।

¶ ऋ० वे० ७, ४, २१, १ ।

दिवि भवानि "वसूनि" धनानि "नः" अस्माकम् "अभ्यर्ष" अभिगमय तथा "पार्थिवा" पार्थिवानि पृथिव्यां भवानि "विश्वा" विश्वानि सर्वाणि धनान्यभिगमय। तथा "येन" त्वदीयेन सामर्थ्येन "द्रविणं" धनं "वयम्" "अश्नवाम" अभि व्याप्नुयाम तत् सामर्थ्यम् "अभि" गमय। किञ्च "आर्षेयम्" ऋषीणामृषिपुत्राणां योग्यं धनं "जमदग्निवत्" जमदग्नेर्यथा त्वं प्रापय एवं "नः" अस्माकमपि अभ्यर्ष [ यद्वा, आर्षेयम्, ऋषीणां योग्यं मन्त्रं जमदग्नेः स्वभूतं मन्त्रं यथा स्वादुतमम् अकार्षीः एनमस्माकं तादृशं मन्त्रं स्वादुतमं कुर्विति मन्त्रद्रष्टा स्तोता कुत्सो नाम ऋषिः प्रार्थयते ] ॥ ३ ॥ १८

॥ पार्थम् ॥ ओ३हो३होयि। अभिवायूम्। वी३
तिप। षागृणानाः। अभिमित्रा। वरूणा। पूयमानाः।
अभीनराम्। धी३जव। न२रथेष्ठाम्। अभिइन्द्राम्।
वृषणाम्। वा ३४३। ज्रा३वा५ज्र ६५६ म् ॥(१)
अभिवस्त्रा। सुवस। नानियर्षा। अभिधेनूः। सुदु
घाः। पूयमानाः। अभिचन्द्रा। भर्त्तवम्। नोहिर
ण्या। अभियश्वान्। रथिनः। दा३४३यि। वा३सो

२ र १र २ १ २ ३ ४ ५
प्रमा६५६ ॥(२) अभीनोआ। पा३दिवि। यावद्गनी।

२ १ २ १ २ १ २ ३ ४ ५ २ १र
अभिविश्वा। पा३र्थिवा। पूयमानाः। अभियेना।

२ १ १ २ ३ ४ ५ २ २ २ १र
द्रविणम्। अश्ववामा। औ३हो३होयि। अभियषँ।

२ १ २ २ ४
या३जमत्। आ ३ ४ ३। ग्रा३यिवा५न्ना६५६ः

(३) ॥ १४* ॥ [१] १८

अथ† यज्जायथाइति ऋचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

१र १र ३ १ २ ३ १ २
यज्जायथा अपूर्व्यमघवन्वृत्रहत्याय।

१ २ ३ १ २ ३ १ २ ३ १र २र
तत्पृथिवीमप्रथयस्तदस्तम्नाउतोदिवम्॥ १‡ ॥

हे "अपूर्व्य"¶ त्वत्तो व्यतिरिक्तेन पूर्वेण वर्जित! हे "मघवन्" मंहनीय-धनवन्! "इन्द्र!" "वृत्रहत्याय" वृत्रहननाय§ "यद्" यदा त्वं "जायथाः" उत्पन्नः प्रादुर्भूतोऽसि "तत्" तदानीमेव

---

* ऊ० गा० ८प्र० २ख० १४सा०।

† 'उक्तोऽभिप्लवः। उक्तः पृष्ठ्यः। उक्तोऽभिजित्। इदानीं स्वरसामानः'—इति वि०।

‡ ऋ० वे० ६, ६, १२, ५।

¶ 'अपूर्वगुण!'—इति वि०।

§ 'वृत्रहन्ता इन्द्रोऽभिधीयते, तस्मै वृत्रहत्याय हविर्दद्म इति वाक्यशेषः'—इति वि०।

